KAVYAMALA. 51.

THE

# PATAÑJALI-CHARITA

OF

# RÂMABHADRA DÎKSHIT.

EDITED BY

PANDIT S'IVADATTA

Head Pandit and Superintendent, Sanskrit Department,

Oriental College, Lahore,

AND

KÂS'ÎNÂTH PÂNDURANG PARAB.

PRINTED AND PUBLISHED

BY

TUKÂRÂM JÂVAJÎ

PROPRIETOR OF JÂVAJÎ DÂDÂJÎ'S "NIRNAYA SÂGAR" PR

BOMBAY.

1895

*Price 10 Annas*

काव्यमाला. ५१

श्रीरामभद्रदीक्षितप्रणीतं

# पतञ्जलिचरितम् ।

जयपुरमहाराजाश्रितमहामहोपाध्यायपण्डितदुर्गाप्रसाददारक-
केदारनाथकृपाङ्गीकृतशोधनकर्मणा शिवदत्तशर्मणा,
मुम्बापुरवासिपरबोपाह्वपाण्डुरङ्गात्मजकाशीनाथ-
शर्मणा च संशोधितम् ।

तच्च
मुम्बय्यां निर्णयसागराख्ययन्त्रालये तदधिपतिना मुद्राक्षरैरङ्कयित्वा
प्राकाश्यं नीतम् ।

१८९५



मूल्यं १० आणकाः ।

विशालमूर्वीवलयं तरस्वी सशैलकान्तारनदीसमुद्रम् ।
त्वमुत्तमाङ्गस्य समुन्नतस्य महत्तमोष्णीषदशामनैषीः ॥ २३ ॥
गत्वैव धातुर्भुवनं युगान्ते कृतस्तुतिः प्राञ्जलिभिर्मुनीन्द्रैः ।
विसृष्टफूत्कारविषानलस्त्वं विश्वत्रयं धक्ष्यसि दुर्निरीक्ष्यः ॥ २४ ॥
जगत्त्रयं यो जठरे बिभर्ति विश्वानि भूतानि च यस्य पादः ।
भोगेन बिभ्रत्पुरुषं तमाद्यं भवान्न वेद्यः परमेष्ठिनोऽपि ॥ २५ ॥
संजल्पितैः किं समरे गृहीत्वा कारागृहं यो रुरुधे महेन्द्रम् ।
तस्यापि लङ्केशसुतस्य हन्ता स लक्ष्मणस्ते किल मूर्तिभेदः ॥ २६ ॥
इत्थं गरुत्मन्तमुदीरयन्तं स दुर्वहश्रीशशरीरखिन्नः ।
कथंचिदालम्ब्य धृतिं फणीन्द्रो गिरा शनैर्गद्गदया जगाद ॥ २७ ॥
मुरद्विषो मूर्तिरियं पुरेव मयाद्य धर्तुं महती न शक्या ।
परीक्षितुं मा गरिमा धृतः किमनेन सत्त्वं मम वा गृहीतम् ॥ २८ ।
इति ब्रुवन्नेव स पन्नगेन्द्रः शरीरभारेण हरेश्चचाल ।
खगेश्वरो मन्दरगौरवाभ्यां तदा भुजाभ्यां द्रुतमाललम्बे ॥ २९ ॥
किमेतदित्युज्झितकेलिपद्मा पयोधिकन्यापि तदा भयेन ।
नवाम्बुजाभेन नवाम्बुजाभं निष्पीडयामास करं करेण ॥ ३० ॥
ततः स्फुरत्पद्मदलाभिरामं प्रमोदबाष्पाकुलपक्ष्ममालम् ।
उद्गाढरोमाञ्चितमूर्तिरक्ष्णोरुन्मीलयामास युगं मुरारिः ॥ ३१ ॥
लघूभवन्तीमथ तस्य मूर्तिं लक्ष्मीपतेर्वोढुमहिः शशाक ।
जहर्ष च श्रीर्धृतकेलिपद्मा यथास्थितं विष्णुरथश्च तस्थौ ॥ ३२ ॥
प्रणम्य भक्त्या परमं पुमांसं पिप्रच्छिषुस्तत्तनुभारहेतुम् ।
विद्वत्प्रियान्व्याकरणानुशिष्टान्प्रायुङ्क्त शब्दान्पवनाशनेन्द्रः ॥ ३३ ॥
यदि प्रसादो मयि यद्यहं च श्रोतुं जगन्नाथ भवामि योग्यः ।
वदात्र हेतुं यदशिश्रियस्त्वमभूतपूर्वं वपुषो गुरुत्वम् ॥ ३४ ॥
इत्युक्तमीशेन भुजंगमानां श्रुत्वा मुकुन्दः सितकन्दलेन ।
मुक्ताफलालंकृतविद्रुमाभं बिम्बाधरं बिभ्रदवोचदेनम् ॥ ३५ ॥

शृणु त्वमाश्चर्यमिदं फणीन्द्र शुश्रूषुरुद्ग्राव्य दृशा सहस्रे ।
साम्यं बिभर्ति स्मरतो यदन्तः कायेन मे कुड्मलितः कदम्बः ॥ ३६ ॥
निरुद्धनिश्वासमवाप्य योगं स्थिरीकृते धारणया च चित्ते ।
अदृश्यत द्रागपनीतमायानैपथ्यमीशस्य परस्य नृत्तम् ॥ ३७ ॥
असत्करासङ्गरणन्मृदङ्गं चतुर्मुखास्फालितचारुतालम् ।
बिडौजसोदञ्चितवेणुनादं वाणीकरक्काणितवल्लकीकम् ॥ ३८ ॥
कपर्दलोलाभ्रनदीतरङ्गं घर्माम्बुसिक्तालिकभस्मपुण्ड्रम् ।
भुजान्तरोद्भूतभुजङ्गहारं कटीविराजत्करिचर्मकक्ष्यम् ॥ ३९ ॥
अमर्त्यलोकैरनिमेषभावमासादितं शश्वदभिष्टुवद्भिः ।
अवेक्ष्यमाणाद्भुतसंनिवेशशिञ्जानमञ्जीरपदारविन्दम् ॥ ४० ॥
अनल्पकल्पद्रुमपुष्पवर्षे चिदम्बरे हेमसभान्तराले ।
कालीसमक्षं कलितप्रमोदैः प्रशस्यमानं मुनिभिः पुराणैः ॥ ४१ ॥
आनन्दनृत्तं नटनायकस्य क्षेमं ददद्दृष्टवते जनाय ।
यावन्मयादर्शि फणीन्द्र तावत्त्वया वपुर्गौरवमन्वभावि ॥ ४२ ॥
इति ब्रुवाणं रमणं रमाया नूनं तदुक्तिश्रवहर्षनुन्नः ।
गलत्प्रमोदाश्रुकणापदेशादानर्च मुक्तामणिभिः फणीन्द्रः ॥ ४३ ॥
रोमाञ्चिते[1] तस्य शरीरमञ्चे क्षणं विनिन्ये नलिनेक्षणोऽपि ।
कुरङ्गदष्टाग्रकुशप्ररोहे करीव तीरे कमलाकरस्य ॥ ४४ ॥
श्रीश त्वदुक्तिश्रवणेन नीते चक्षुःसहस्रे मम चारितार्थ्यम् ।
तथापि पश्येयमवश्यमैशं नृत्तं प्रसीदेति स तं ययाचे ॥ ४५ ॥
स याचमानाय सरोरुहाक्षस्तस्मै पुनर्विस्मयमादधानः ।
कथामथो माक्षिकमाक्षिपन्त्या भुजङ्गराजाय गिरा जगाद ॥ ४६ ॥

1. सर्पाणां रोमाभावेऽपि कविभी रोमाञ्चो वर्ण्यते. तथा च—
'मन्दोद्धूतैः शिरोभिर्मणिभिरगुरुभिः प्रौढरोमाञ्चदण्ड-
स्फायन्निर्मोकसंधिप्रसरदुरुगलत्सन्मदस्वेदपूराः ।
जिह्वायुग्माभिपूर्णाननविषमसमुद्गीर्णवर्णाभिरामं
वेलाशैलान्तभाजो भुजगयुवतयस्त्वद्गुणानुद्गिरन्ति ॥'
इति मुरारिः.

पणीति कश्चिन्मुनिरस्ति पूर्वं स पाणिनं नाम कुमारमाप ।
स्वतुल्यनाम्ना तनयेन सोऽपि दाक्षीमुदूह्य दृढमभ्यनन्दत् ॥ ४७ ॥
स पाणिनो दक्षभुवा पुरन्ध्या रिपुः पुराणामुमयेव रेमे ।
काले मुनिः स्कन्द इव प्रसूतो हर्षं तयोः पाणिनिरप्यकार्षीत् ॥ ४८ ॥
तपोभिराराध्यवतः कठोरैस्तस्य प्रसन्नस्तरुणेन्दुचूडः ।
अघोषयद्दण्डविघट्टनेन चण्डं करस्थं डमरुं पुरस्तात् ॥ ४९ ॥
शब्दावलेर्व्याकरणं चिकीर्षोस्तदा मुनेः पाणिनसम्भवस्य ।
मृडस्य चण्डा डमरुप्रणादाः शास्त्रादिसूत्राणि चतुर्दशासन् ॥ ५० ॥
इतीश्वरानुग्रहतो निबध्नन्सूत्राणि स व्याकृत शब्दजालम् ।
सुष्ठु प्रयोगं कथयन्ति यस्य स्वर्लोकसोपानपरंपरेति ॥ ५१ ॥
कात्यायनः कर्कशया प्रसाद्य तपस्यया चन्द्रकलावतंसम् ।
तस्याथ सूत्रेषु पदार्थबोधप्रवर्तकं वार्तिकमाबबन्ध ॥ ५२ ॥
प्रयुक्तया व्याकरणस्य सूत्रैः सवार्तिकैः साधुतया पदानाम् ।
अदुग्ध गौर्लौकिकवैदिकात्मा चिराय दुग्धं त्रिदिवं जनानाम् ॥ ५३ ॥
श्रुत्वा निजस्योपरि वार्तिकानि सूत्रप्रबन्धस्य स सूत्रकारः ।
कात्यायनेन ग्रथितान्यकुप्यत्कालो हि धीरेऽपि करोति मोहम् ॥५४॥
प्रकम्पितोष्ठं परिवर्तिताक्षं पादक्रमन्यञ्चितभूमिभागम् ।
तमाश्रमं पाणिनिराजगाम कात्यायनस्तिष्ठति यत्र योगी ॥ ५५ ॥
तमापतन्तं कुपितं मुनीन्द्रो दृष्ट्वापि सज्जीकृतपाद्यपात्रः ।
कात्यायनः प्रत्युदगान्न यावत्त पाणिनिस्तावदृषिं शशाप ॥ ५६ ॥
यस्मादविज्ञाय मम प्रभावं वृषध्वजानुग्रहभाजनस्य ।
सूत्रेष्वनुक्तोक्तदुरुक्तचिन्तावृथोद्यमं वार्तिकमातनिष्ठाः ॥ ५७ ॥
तस्मात्पतेदेव तनुस्तवेयमित्युद्धत पाणिनिशापवाक्यम् ।
आकर्ण्य तूर्णं स विवृद्धमन्युः कात्यायनोऽपि प्रति तं शशाप ॥ ५८ ॥
भवानजानन्भगवत्प्रसादविवर्तभूतान्यपि वार्तिकानि ।
मह्यं यतः शापमदान्मदेन ततो विशीर्येत तवापि मूर्धा ॥ ५९ ॥

इति त्रयोदश्यभिधानवत्या तिथौ मिथः शापविसृष्टदेहौ।
उभौ मुनीन्द्रौ स्वकृतैस्तपोभिः पत्युः पशूना पदमाश्रयेताम् ॥ ६० ॥
आचार्ययोरद्भुतबोधभाजोराशोचयन्तः परलोकयात्राम्।
तदादि वैयाकरणा महान्तस्तस्या तिथौ न प्रसजन्ति शास्त्रम् ॥ ६१ ॥
ततो विवव्रे बुधमण्डलाय सवार्तिकं पाणिनिसूत्रबन्धम्।
स व्याघ्रभूतिः सह पाणिनीयः श्वोभूतिना वाक्यकृदाश्रवेण ॥ ६२ ॥
भोगीन्द्र तेषा भुवि वार्तिकानामशेषविद्वज्जनदुर्ग्रहाणाम्।
भाष्यं महत्कुर्विति भक्तरक्षी नियोक्ष्यते त्वा किल नीलकण्ठः ॥ ६३ ॥
तदा नियोगात्तरुणेन्दुमौलेर्धरातले त्वं विहितावतारः।
चिदम्बरक्षेत्रगतः पवित्रं नेत्रोत्सवं द्रक्ष्यसि नृत्तमैशम् ॥ ६४ ॥

इति मुरमथनोक्त्या मोदमानः फणीन्द्र-
स्त्रिपुरहरनियोगं दीर्घकालादवाप्य।
तदपि परिदिदृक्षुस्ताण्डवं चन्द्रमौले-
रवतरितुमवन्यामंशतश्चाशशंसे ॥ ६५ ॥

इति श्रीयज्ञरामदीक्षितपुत्रस्य रामभद्रयज्वनः कृतौ पतञ्जलिचरिते
प्रथमः सर्गः।

---

द्वितीयः सर्गः।

भूतलेऽथ जननोचितमार्षं वंशमीक्षितुमविक्षदहश्यः।
जन्तुविस्मृतपरस्परवैरं तापसाश्रमवनान्तमनन्तः ॥ १ ॥
यत्र काननचरो गजराजो वीतकर्दममृणालविशङ्की।
जृम्भणेषु चटुलेन करेण व्याचकर्ष किल केसरिदंष्ट्राम्[1] ॥ २ ॥

---

१. 'शुण्डालेन सलीलमेष कलभो वक्रान्मृणालोज्ज्वल
जृम्भारम्भविकस्वरान्मृगपतेर्दंष्ट्राङ्कुरान्कर्षति।
एषा वत्सतरी च मातरि तृणान्यत्तु गताया क्वचि-
द्द्वीपिन्या वरकन्दरस्थितिजुषः स्तन्यं पयश्चूषति ॥'

इत्यदर्सायजानकीपरिणयनाटके
'उलूकाना काकैरुदभवदुदासीनवसति
रहःक्रीडा सिंहैरनुकलभमन्मत्तकरिणाम्।

अम्बरान्तरगते रविबिम्बे यत्र चानुदिनमातपभीतान् ।
पन्नगान्वनमयूरयुवानः पालयन्ति गरुता विततेन ॥ ३ ॥

यत्र चत्वरमपास्य तटान्ते चर्वितुं गवि तृणानि गतायाम् ।
द्वीपिनी रसनया परिलिह्य स्तन्यमर्पयति वत्सतरस्य ॥ ४ ॥

यत्र मुक्तकुहरं हिमभीतं रक्षितुं निजमुखेन गृहीत्वा ।
मूषिकार्भकमरण्यबिडाली मूलकोटरमगस्य निनाय ॥ ५ ॥

कृष्णसारवदनार्पितदर्भं कीरदत्तयवकल्पितहव्यम् ।
हस्तिपुष्करसमाहृतनीरं हृष्यति स्म तदवेक्ष्य वनं सः ॥ ६ ॥

तत्र कापि ददृशे मुनिकन्या गोणिकेति गुणसिन्धुरनेन ।
या हि यापयति पुत्रनिमित्तं दारुणेन तपसा दिवसानि ॥ ७ ॥

जन्म तापसकुले परिशुद्धे शीलमीशगृहिणीस्पृहणीयम् ।
तां च वीक्ष्य तपसा ग्लपिताङ्गीं मातरं स मनसा निरनैषीत् ॥ ८ ॥

दातुमर्घ्यमहिमद्युतयेऽम्भः पूतमञ्जलिपुटे विनिधाय ।
सा निमील्य नयने भगवन्तं भास्करं हृदि तदा परिदध्यौ ॥ ९ ॥

प्राज्ञमर्पय सुतं मम भास्वन्नन्तरित्थमभिसन्धिजुषोऽस्याः ।
पन्नगाधिपतिरर्कनियुक्तः प्राविशज्जनितुमञ्जलिगर्भम् ॥ १० ॥

सभृतार्घ्यजलमञ्जलिमुच्चैः सा सहस्रकिरणं प्रति देवम् ।
यावदुत्क्षिपति तावदमुष्मात्तापसाकृतिरहिः स पपात ॥ ११ ॥

पादयोगपरिपावितभूमिं सा सुवर्णगिरिदृष्टपटुत्वम् ।
दक्षिणं कलयितुं कमलेशं तं ददर्श नवमर्कमिवाग्रे ॥ १२ ॥

---

अजाना गोपुच्छैरजनि जनितप्रीतिभिरय. (?)
समालापोऽन्योन्य शुककुलबिडालस्य समभत् ॥'
समह सर्पाणा समजनि सदा नाकुलकुलै-
र्मयूरेन्द्रान्निद्रा फणिकुलमद' प्रापयति च ।
गवा योगक्षेमे कृतमतिरभूद्व्याघ्रनिकरो
मृगाणा सबन्धः श्वभि ···रन्योन्यमहितः ॥'

इत्यप्पादीक्षितीयगौरीमायूरचम्पू .

मेधया विमलया चिरमन्तर्व्याप्य निष्पतितयेव बहिश्च ।
शारदेन्दुमहसः सहचर्यापाण्डरं भसितकुण्ठनयाङ्के ॥ १३ ॥
धावितौ मनसि सत्त्वगुणेन द्वौ गुणावपि रजस्तमसीयौ ।
तौ जटाभरमृगाजिनदम्भाद्दर्शयन्तमिव चोर्ध्वमधश्च ॥ १४ ॥
चित्तसङ्गिहरशेखरचन्द्रस्थित्यपेक्षकमिवोडुकदम्बम् ।
दक्षिणेन विमल श्रवणेन स्फाटिकाक्षवलयं कलयन्तम् ॥ १५ ॥
वल्कबिम्बमुदितस्मितर्माषद्वारिजं विकचमित्युपयान्तीम् ।
चञ्चरीकपटलीमिव कण्ठे शकराक्षमणिधाम दधानम् ॥ १६ ॥
पुत्र एष मम पुण्यविपाकात्प्रादुरास किल पावकतेजा. ।
इत्युपेत्य मुदिता सहसा सा मूर्ध्नि तं मुनिकुमारमजिघ्रत् ॥ १७ ॥
प्रस्नुतस्तनमुदञ्चितबाष्पं विस्मृतव्रततपोविधिखेदम् ।
पुत्रलाभसुखनाम्नि समुद्रे मज्जती स जननी प्रणनाम ॥ १८ ॥
तं तदाभिवदितुं प्रणत प्राड्माम तस्य जननी वितताम ।
यत्पतन्नभवदञ्जलितोऽसौ तत्पतञ्जलिरिति प्रथमानम् ॥ १९ ॥
श्रावितश्च स तदाभिवदन्त्या नाम तत्प्रथममेव जनन्या ।
चिन्तितस्त्वदुपकण्ठमुपेयामित्युदीर्य तपसे चलितश्च ॥ २० ॥
दर्शितद्रुमलताफलपुष्पे दक्षिणोदधितटेऽथ निवेश्य ।
चन्द्रचूडकरुणाघटनार्हे दारुणे तपसि चारु स तस्थौ ॥ २१ ॥
आत्मनोऽपि भरणे धरणी मां प्रागियं नियुयुजे यदशक्ता ।
न व्यथेत तदसाविति तस्या स न्यधत्त चरणाङ्गुलिमेकाम् ॥ २२ ॥
अर्कमण्डलगतः सहसा मे शंकरोऽभिमतमर्पयितेति ।
सोऽवगम्य तदिवाथ जिघृक्षुः स्वं भुजद्वयमुदक्षिपदूर्ध्वम् ॥ २३ ॥
नायमीक्षितचरो नयनैर्मे मूर्ध्नि भूभृत इति प्रहिताक्षः ।
चापलादिव स चण्डमरीचिं संददर्श न ततो विरराम ॥ २४ ॥
तिष्ठता तपसि भक्षयितव्यं कन्दमूलफलपर्णमपास्य ।
पूर्वजन्मकृतवासनया किं पूतमभ्यवजहार स वासम् ॥ २५ ॥

आगतां शुचमनीक्षितभास्वान्नित्यशीतलरसातलवासात् ।
ह्रातुमूष्मदिवसेषु स हर्षादध्युवास शिखिपञ्चकमध्ये ॥ २६ ॥
शार्ङ्गधन्वशयनत्वदशायां ताडितस्य तरलाब्धितरङ्गैः ।
तस्य किं क्षतमभूदुदवासे शीतले शिशिरकालदिनेषु ॥ २७ ॥
प्राग्बिलेशयतया दुरवापान्यासनानि यदनेन जितानि ।
अद्भुताय तदसून्नुरुधे यन्नात्र चित्रमनिलाशितयास्य ॥ २८ ॥
चक्षमे वपुषि कर्तुमनून्न्यासमङ्कुरितकर्णकराङ्घ्रिः ।
सांप्रतं किल स तापसरूपो मातृकाक्षरगणस्य फणीन्द्रः ॥ २९ ॥
रुन्धति श्वसितमन्तरमुष्मिन्नीक्षणप्रभृतिरिन्द्रियवर्गः ।
[1]अर्यमातप इवाहरपाये स्पन्दितुं बहिरलं न बभूव ॥ ३० ॥
प्राणरोधमतनिष्ट यदायं सा पुनः प्रथममेव ततोऽपि ।
कुण्डलिन्यभवदस्य वशे स्यात्तत्र कुण्डलिनि तत्किमयुक्तम् ॥३१॥
पद्मकोशदलनं कृतमासीदुद्यतोषसि सहस्रकरेण ।
[2]प्रागभूवमसहस्रमुखः किं नेति तत्स इव सोऽपि चकार ॥ ३२ ॥
चन्द्रचूडचरणाम्बुजयुग्मध्यानसंततिरसानुभवेन ।
निर्मलास्य धिषणा परिणेमे चन्द्रिकेव शरदागमनेन ॥ ३३ ॥
गोणिकासुततपःकृतशङ्का गोत्रभित्प्रभृतयस्त्रिदिवेशाः ।
तत्तपो दलयतेति तदानीं प्रैरिर[3]न्नमरवारनताङ्गीः ॥ ३४ ॥
अङ्कभाज इव कल्पकवल्यो जङ्गमा इव मनोजपताकाः ।
विभ्रमैरथ विटान्भ्रमयन्त्यः सुभ्रुवो ववलिरेऽस्य पुरस्तात् ॥ ३५ ॥
[4]स्रस्तनीविनहनं च्युतचेलव्यञ्जितस्तनमृजूकृतमध्यम् ।
पाणिना विटपमानमयन्ती पल्लवानहृत काचन तासु ॥ ३६ ॥

---

१ 'अर्कमातप' इति पुस्तकान्तरे. २. 'प्रागभूवमसहस्रकर. किम्' क. ३ 'प्रैरयन्' ख. ४. 'स्रस्तनीविनहनच्युतचेल' क.

'आरक्तसंकुचदपाङ्गमुदस्तहस्त-
मुन्नम्रितस्तनमृजूकृतमध्यभागम् ।
नीवीसमुच्छ्वसितदर्शितनाभिदेश
निद्रावशेषकलुषा कुरुतेऽङ्गभङ्गम् ॥'

इत्यदसीयशृङ्गारतिलकभाणे.

एकया विकचचम्पककॢप्तं गेंडुकं कचभरे विनिधातुम् ।
दोर्युगं नखपदोज्ज्वलमूलं नोद्धृतं न विरतं च नताङ्ग्या ॥ ३७ ॥
कल्पितं बकुलदाम कराभ्यामर्पयाम्यहमिहेति हसन्ती ।
आहृतांशुकमदर्शयदेका हेमकुम्भसदृशं कुचभारम् ॥ ३८ ॥
वीक्ष्य कानकशुके कुचयुग्मं द्रागनुद्रवति दाडिमबुद्ध्या ।
स्रंसमानजघनांशुकमीषद्दृश्यनाभिबिलमद्रवदन्या ॥ ३९ ॥
अन्यया तरुतले तरलाक्ष्या वारितोऽपि वलयस्वनितेन ।
आपतन्मधुकरोऽधरबिम्बं पातकी परिचुचुम्ब चिराय ॥ ४० ॥
स्वेदबिन्दुकमनीयकपोला श्वासकम्पितघनस्तनकुम्भा ।
भूतले निहितजानुयुगान्या कन्दुकं प्रतिजघान कराभ्याम् ॥ ४१ ॥
मा विकर्ष मम वेणिलतामित्याहतः करजुषा कमलेन ।
किं व्यथेति पुनरेव तरुण्या चुम्ब्यते स सुकृती ननु बर्ही ॥ ४२ ॥
संप्रदर्श्य नवमौक्तिकहारं संमुखे नवमृणाललतेति ।
केलिचंक्रममिवोपदिशन्ती कापि दूरमहरत्कलहंसम् ॥ ४३ ॥
संनिधौ किमपि चारु नदन्तं मामयं बत विडम्बयतीति ।
कङ्कणक्वणितपाणिकपोतं कापि केलिकमलेन जघान ॥ ४४ ॥
चारु वाममधिरोप्य कराब्जं दक्षिणेन परिमृष्टपतत्राम् ।
मञ्जुलानि रणितानि तदानीं शारिकां कलमपाठयदेका ॥ ४५ ॥
प्रौढयौवनमदोद्धतलीलं पञ्चबाणपिककेलिविलासम् ।
इत्थमन्तिकचरं सुरनारीचक्रमेत्य तमियेष विकर्तुम् ॥ ४६ ॥
लोलहेमवलयेन विराजन्मुद्रिकेण धृतिभिः सह यूनाम् ।
पाणिपल्लवयुगेन मृदङ्गस्ताडितोऽजनि कयापि तरुण्या ॥ ४७ ॥
कञ्चुकस्थगितवल्गदुरोजं कन्दलत्क्वणितकङ्कणहस्तम् ।
तन्वती तरलतां तरुणानां तालयोर्द्वयमघट्टयदन्या ॥ ४८ ॥
कण्ठजृम्भितकलस्वनभङ्ग्या कामिनां भ्रमिसृजा हृदयेषु ।
अङ्गुलीभिरिव पल्लवयन्त्या वल्लकीमपरया समगायि ॥ ४९ ॥

---

१. 'गर्भक' ख.

पक्वबिम्बफलरोचिषि धन्यं वेणुमेकमधरे विनिवेश्य।
कापि वादनमिषेण मृगाणां कर्णयोरपि मधूनि ववर्ष ॥ ५० ॥
स्पन्दमानकबरीभरमाल्यं मन्दहासमधुराधरबिम्बम्।
घर्मवारिकणमौक्तिकपङ्क्ति क्लिन्नपत्रमकराङ्ककपोलम् ॥ ५१ ॥
भावसूचनविलोलकराग्रं संहतस्तनलुठन्मणिहारम्।
चारुनूपुरझलज्झलिताङ्घ्रिन्यासमेणनयनानटदेका ॥ ५२ ॥
केशमाल्यमकरन्दतुषारो वीटिकारसलवङ्गसुगन्धी।
सुभ्रुवा कुचतटाहतिमन्दस्तं तदाभजदृषिं वनवातः ॥ ५३ ॥
इत्यमर्त्यवनिताललितेन क्षोदितोऽपि न चचाल स योगी।
वाति[1] चण्डपवनो वसुमत्यां तावता चलति किं गिरिरीषत् ॥५४॥
काचिदेत्य तदनु प्रमदानामालिलिङ्ग तमुरोजयुगेन।
कानने कलभकुम्भनिकाषादस्य किंचिदधिकं न ततोऽभूत् ॥५५॥
आदधे वपुषि तस्य ततोऽन्या वक्रपाटलमुखानि नखानि।
खेलतामुपरि तद्विहगानामातनोत्पदनखार्पणभङ्गीम् ॥ ५६ ॥
कापि वक्त्रकमलेन मृगाक्षी तत्कपोलमथ चारु चुचुम्ब।
न व्यकारि स ततोऽपि तपस्वी लेहनादिव कुरङ्गशिशूनाम्॥५७॥
तस्य तत्र मतिनिर्जितकामे यौवतस्य विफलोऽजनि यत्नः।
किं करोतु बलिना युधि नाथे पातिते परनृपेण भटौघः ॥ ५८ ॥
तादृशं भुवि कुशासनभाजं धारिताक्षवलयं करपद्मे।
नासिकाग्रनिहिताक्षमवेक्ष्य व्यस्मयन्त सुरविभ्रमवत्यः ॥ ५९ ॥
विभ्रमैरपि निर्जैरविकार्यं तं विरागमिव मूर्तमवेक्ष्य।
शापदानचकिता हरिणाक्ष्यस्तस्य किंचिदपचक्रमुरग्रात् ॥ ६० ॥
हृष्यतः शतमखस्य नियोगात्सिद्धचारणगणेन तदानीम्।
पातिताजनि मुनेरुपरिष्टात्पारिजातकुसुमोत्करवृष्टिः ॥ ६१ ॥
तावदम्बुदकदम्बगभीराद्ध्वनुस्त्रिदिवदुन्दुभयश्च।
या विमोहयितुमागतवत्यस्ताभिरेव ननृते च वधूभिः ॥ ६२ ॥

---

१. 'वातु' ख. 'न पादपोन्मूलनशक्तिरंह शिलोच्चये मूर्च्छति मारुतस्य' इति रघुवंशे.

तस्यातिदुष्करमवेक्ष्य तपः प्रसन्नो
दातुं वरं तदुचितं दययाथ तस्मै।
कैलासगौरमधिरुह्य वृषं महान्त-
मर्धेन्दुमौलिरुमया सममाविरासीत्॥ ६३॥

इति श्रीयज्ञरामदीक्षितपुत्रस्य रामभद्रयज्वनः कृतौ पतञ्जलिचरिते द्वितीयः सर्गः।

---

## तृतीयः सर्गः।

अथ वीक्ष्य स शैलकन्यया सहितं चन्द्रकलाधरं पुरः।
रभसादुदतिष्ठदासनात्प्रणमन्नञ्जलिना पतञ्जलिः॥ १॥
तदुपागमहर्षविस्मयौ स्तिमितं यद्यपि तं वितेनतुः।
स तथापि चकार दण्डवत्प्रणिपातं भुवि भक्तियन्त्रितः॥ २॥
प्रणिपत्य समुत्थितस्तदा मुदितो मूर्ध्नि कृताञ्जलिर्मुनिः।
तरुणेन्दुवतंसमादरात्तमुपश्लोकयितुं प्रचक्रमे॥ ३॥
[1]श्रुतयोऽपि न शक्नुवन्ति ते स्तुतये किं पुनरीश मादृशः।
भणितिर्गृणती भवद्गुणान्परिशुध्येदिति किं तु मे [2]मतिः॥ ४॥
जगदीश यदेकमद्वयं तव सच्चित्सुखलक्षणं वपुः।
विधिविष्णुहरा इति त्रिधा बिभिदे तन्निजयैव मायया॥ ५॥
तव देव गिरा यथार्थया ननु कर्माणि नरा वितन्वते।
सुखबोधमयं सुमेधसः परमं ब्रह्म वदन्ति केवलम्॥ ६॥

---

१. 'अतीतः पन्थानं तव च महिमा वाङ्मनसयो-
रतद्व्यावृत्त्याय चकितमभिधत्ते श्रुतिरपि।
स कस्य स्तोतव्यः कतिविधगुणः कस्य विषयः
पदे त्वर्वाचीने पतति न मनः कस्य न वचः॥'

इति महिम्नः स्तोत्रे.

२. 'मम त्वेतां वाणीं गुणकथनपुण्येन भवतः
पुनामीत्यर्थेऽस्मिन् पुरमथन बुद्धिर्व्यवसिता॥'

इति महिम्नः स्तोत्रे.

अतिसुन्दरमस्तु मे सदा हृदये त्वद्वपुरिन्दुभूषणम् ।
नियतं खलु यस्य दर्शनात्स्मरणीयो रमणो रतेरभूत् ॥ ७ ॥
[1]जडमेव रथाङ्गमेकमप्यपरं द्वादशधा विभज्यते ।
कुरथेन ततस्त्वया कथ विजितं वैरिपुरत्रयं विभौ ॥ ८ ॥
भवदाश्रयणेन मार्गणा अपि लक्ष्मीपतयो भवन्ति यत् ।
विपरीतमभूदिदं यतोऽजनि लक्ष्मीपतिरेव मार्गणः ॥ ९ ॥
अपि सेव्यमनेकशाखया भजतामप्यधिकं फलप्रदम् ।
परमेश भवन्तमीदृशं जगतः स्थाणुरिति ब्रुवन्त्यहो ॥ १० ॥
विनिहत्य रणेऽन्धकं कलाधरचूडामणिरप्यहो भवान् ।
न खलु त्रपते ततो यतः परिपूर्णं त्वयि नास्ति पौरुषम् ॥ ११ ॥
किमिहाद्भुतमस्ति यज्जटातटिनी कामपि तावकी पपौ ।
जलधिं चुलुकीचकार किं तव भक्तोऽपि न कुम्भसंभवः ॥ १२ ॥
तव पञ्चमुखानि लोचनान्यपि तु त्रीणि तथाष्टमूर्तयः ।
इति शैलसुतातिसुन्दर किमिति त्वामवृणीत गेहिनम् ॥ १३ ॥
वसनं करिचर्म वाहनं वृषभः कोऽपि विभूषणं फणी ।
अशनं विषमासिका गिराविति चित्रं जगता त्वमीशिषे ॥ १४ ॥
वहतो नृकरोटिमालिकामनुलिप्तस्य परेतभस्मना ।
पितृकानननर्तकस्य ते प्रमथेशस्य गुणास्तु पावनाः ॥ १५ ॥
अरुणेन पदाम्बुजेन ते मम चित्रं क्रियते मनः शुचि ।
मृदुनाप्यमुना भुजान्तरं कठिनं न त्रुटितं यमस्य किम् ॥ १६ ॥
विजिताद्रजतेन निर्मितौ विषमेषोरिषुधी इवाहृतौ ।
कलये हृदि काङ्क्षितप्रदे तव जङ्घे तरुणेन्दुशेखर ॥ १७ ॥

---

१. 　'रथः क्षोणी यन्ता शतधृतिरगेन्द्रो धनुरथो
　　रथाङ्गे चन्द्रार्कौ रथचरणपाणि. शर इति ।
　दिधक्षोस्ते कोऽय त्रिपुरतृणमाडम्बरविधि-
　　र्विधेयै. क्रीडन्त्यो न खलु परतन्त्रा प्रभुधियः ॥'
इति महिम्नः स्तोत्रे.

गजहस्तजिगीषयेव यौ धृततारक्षवचर्मकञ्चुकौ ।
गिरिजाकरमर्दनोचितौ भवदूरू भव भावये हृदि ॥ १८ ॥
तव मध्यमहं तनु भजे नितरामीर्ष्यति यत्र नाभये ।
प्रलयोद्धतरुद्रलोचनद्रुतरूप्याद्रिनदीजलभ्रमः ॥ १९ ॥
भुजगाभरणं भुजान्तर भसितोद्धूलितमीश ते भजे ।
स्फटिकाद्रिशिलातलं यथा करिकीर्णाम्बुजनालकोमलम् ॥ २०
अरुणाङ्गुलिपल्लवौ नखद्युतिसभावितपुष्पडम्बरौ ।
कलिमोचन कालकण्ठ ते कलयेऽहं करकल्पपादपौ ॥ २१ ॥
मुखचन्द्रसमीपवर्तिनीमरुणामीश घनावलीमिव ।
तव नौमि जटापरम्परा सितविद्युन्निभगाङ्गनिर्झराम् ॥ २२ ॥
अविवेकतमोनिवृत्तये विलसन्तं विषमास्त्रशासनम् ।
मधुरस्मितचन्द्रिकोदयं वदनेन्दुं तव चिन्तये हृदि ॥ २३ ॥
इति तं पुलकोद्गमैः स्तनौ हृदि भक्त्या प्रमदाश्रुणा दृशोः ।
वचसि स्तुतिभिश्च संगतं परितुष्यन्प्रभुरब्रवीदिदम् ॥ २४ ॥
तपसा तव शेष तोषितो वितरिष्यन्वरमागतोऽस्मि ते ।
अचिरेण वृणीष्व तं यतो वपुरीदृक्तव वारित सुखात् ॥ २५ ।
चरितं निजमादितः स्मरन्नथ शेषेति निमन्त्रितो मुनिः ।
पदवार्तिकभाष्यनिर्मितौ प्रथमं पाटवमभ्ययाचत ॥ २६ ॥
अथ तस्य जगत्त्रयप्रभोर्नटनालोकनयोग्यता पुनः ।
मुनिमर्थयमानमात्मनः स तथास्त्वित्यवदन्मुदा मृडः ॥ २७ ॥
अयि वत्स चिदम्बराभिध नगर त्वं व्रज काननाध्वना ।
तव तत्र नटेयमीक्षितुं दययेत्यन्तरधादुदीर्य सः ॥ २८ ॥
इति तस्य गिरा चिदम्बरं नगरं प्रास्थित नाट्यलिप्सया ।
मुदितः स मुनिर्मुमुक्षया भवतप्तो निकटं गुरोरिव ॥ २९॥
अपरं प्रविशन्वनं वनादपरं चाश्रममाश्रमाद्व्रजन् ।
ददृशे स पवित्रदर्शनः सुरसिन्धोरिव पाथसां भरः ॥ ३० ॥

पथि तं फलपुष्पसचयैः परिपूज्येव मुनि वनद्रुमाः।
पवनाकुलपल्लवच्छलात्सफलं जन्मन इत्यनर्तिपुः ॥ ३१ ॥
बुधमृद्धरसा पदे पदे परिपाकच्युतपुष्पकोमला।
पदवी तमनन्दयत्कवेः पठितव्याकरणस्य वागिव ॥ ३२ ॥
गिरिनिर्झरशीकरान्किरन्सममारण्यविहङ्गकूजितैः।
मुषितद्रुमपुष्पसौरभो मुदमाधत्त वनानिलो मुनेः ॥ ३३ ॥
कटिबद्धमृगादनत्वचं कपिलोन्नद्धजटाभरं मुनिम्।
तमवेक्ष्य तरक्षवो वने न पलायन्त न चाभिचक्रमुः ॥ ३४ ॥
चटुलाक्षमुदञ्चिताननं चलवालाञ्चलमीषदन्तरम्।
कुतुकेन कुरङ्गशावकास्तमृषिं ज्ञातिमिवानुदुद्रुवुः ॥ ३५ ॥
कपयस्तदवेक्षणे तरून्व्यथयामासुरसाधुभिः पदैः।
पदशास्त्र इवानधीतिनः कवयः कर्णपथान्विपश्चिताम् ॥ ३६ ॥
तमवेक्ष्य निनिन्दुरुच्चकैरपदे[1] पक्कणकुक्कुराः पथि।
सरसस्य कवेः क्रमं गिरामवकर्ण्याक्षमयेव दुर्धियः ॥ ३७ ॥
ददृशे किल तेन गच्छता गिरिनद्या कलहंसमण्डली।
कियदप्यसृगुक्षिता तनौ गिरिशस्येव कपालमालिका ॥ ३८ ॥
अचलोर्ध्वतलादवस्थितं निपतन्तं स ददर्श निर्झरम्।
रविरश्मिजिता कृतं ध्वजे विपिनेनेव दुकूलपल्लवम् ॥ ३९ ॥
कठिनोपलघट्टनोत्थितान्पतितान्निर्झरपाथसां कणान्।
चलितानविशेषतोऽग्रहीच्चमराणामपि वालधीन्मुनिः ॥ ४० ॥
निबिडोपलगर्तनिःसरत्फणिफूत्कारभियापसर्पिणः।
हरिणा नयनैः समाकुलैः पदवीमुत्पलिनी मुनेर्व्यधुः ॥ ४१ ॥
ज्वलितारुणपल्लवानलश्चिरि[2]बिल्वप्रसवैकलाजया।
अचलस्य करग्रहोत्सवो वनलक्ष्म्येति विनिश्चिकाय सः ॥ ४२ ॥

---

१. 'ननद्रुरुच्चकै' इति ख-पुस्तके; 'ननर्दुरुच्चकैः' इति भव्यः पाठो भवेत्.
२. 'चिरिबिल्वप्रसवैकरम्यया' क.

मधुरध्वनयो मधुव्रता मदनिष्यन्दमलीमसे पथि ।
अवदन्मुनये निरक्षरं द्विपमासन्नसरोवगाहिनम् ॥ ४३ ॥
तरुमूलविहारिणो दरीभुवि भल्लूकगणानजीगणत् ।
मृडकण्ठरुचीन्वनश्रियः कचभारानिव जङ्गमान्मुनिः ॥ ४४ ॥
मृगराजकराहतित्रुटत्करिकुम्भच्युतमौक्तिके पथि ।
निबिडोड्डुकदम्बडम्बरे स मुनिश्चन्द्र इवाम्बरे ययौ ॥ ४५ ॥
अतिलङ्घ्य वनानि जग्मुषा ददृशे तेन चिदम्बरं पुरम् ।
इह ताण्डवयिष्यतीश्वरः कृपयेति प्रथमं गणैर्वृतम् ॥ ४६ ॥
पृथुलश्रवसो बृहन्मुखा गड्डुकण्ठा गिरिसन्निभोदराः ।
विकटोच्छ्रितजानवः स्मरं विहसन्तीव यदागता गणाः ॥ ४७ ॥
तमसामिव देहिनो भरा यमुनाया इव पिण्डिता झराः ।
जलदा इव मूर्तसंचराः प्रमथा यत्परितो विजह्रिरे ॥ ४८ ॥
विहरन्ति तरक्षुभिर्मिथो निनदैर्यत्र निगृह्णते हरीन् ।
मुखविक्रियया च तर्जयन्त्यगकन्यापरिचारिणीर्गणाः ॥ ४९ ॥
कुसुमाहृतये गणैः प्रभोर्नवमुन्मत्तवनं प्ररोप्यते ।
अपि यत्र विमृश्य लूयते प्रसवामोदघना च केतकी ॥ ५० ॥
अनुलेपनसंग्रहं प्रभोः प्रमथा यत्र परे वितन्वते ।
परितर्जितघोरफेरवं प्रतिपद्यैव परेतभूतलम् ॥ ५१ ॥
मलयद्रुमकोटरान्तरादपि वल्मीकबिलोदरादहीन् ।
चकृषुः किल यत्र भूषणं नवमीशाय गणाः प्रदित्सवः ॥ ५२ ॥
मलयाद्रिपटीरवासितान्द्रुतिगर्तेषु समीरणार्भकान् ।
प्रभुकङ्कणकुक्षिपूरणं तनितुं यत्र गणा निरुन्धते ॥ ५३ ॥
पुरदाहमनङ्गपातनं गरलास्वादनमन्तकक्षतिम् ।
गजदानवखण्डनं जगुः प्रमथा यत्र चरित्रमैश्वरम् ॥ ५४ ॥
कलयन्ति विभूतिभस्त्रिकां कतिचिद्यत्र गृहीतसूचयः ।
अपरैरपि नाम सीव्यते नवरुद्राक्षमणिप्रसञ्जनात् ॥ ५५ ॥

विलसद्भसितत्रिपुण्ड्रका धृतरुद्राक्षकिरीटमौलयः ।
कति यत्र नयन्ति वासरान्शिवपञ्चाक्षरमन्त्रजापिनः ॥ ५६ ॥
शिवभक्तगणे प्रदक्षिणक्रमणं यत्परितो वितन्वति ।
भसितैरपरः समुन्नतो वरणोऽकल्प्यत तत्तनुच्युतैः ॥ ५७ ॥
घटनाय जटाहिमांशुना परिगृह्णन्त्युडुमण्डलीमिव ।
शिवमर्चयितुं यदाश्रया द्विजलोका धवलार्कमञ्जरीम् ॥ ५८ ॥
गिरिशार्चनबिल्वपल्लवग्रहजैः पाणिषु कण्टकक्षतैः ।
कमलप्रमुखाङ्करेखिका वसतां यत्र बतोपमीयते ॥ ५९ ॥
निवसन्ति दिवः कति श्रियः कति वाण्यः कति मुक्तयः कति- ।
इति वेद्मि न तत्र याः शिवो विनियुङ्क्ते प्रतिभक्तपूरुषम् ॥ ६० ॥
मृडनाट्यदिदृक्षुभिर्जनैः परितस्तन्नगरं परिष्कृतम् ।
प्रविशन्ददृशे पतञ्जलिः प्रथमं व्याघ्रपदा तपस्विना ॥ ६१ ॥
स समाधिदृशा निशामयन्फणिनामेष पतिः पतञ्जलिः ।
इति तस्य सभाजनार्थमानयदर्घ्यं सह पाद्यवारिणा ॥ ६२ ॥
उपचारमुपेत्य तत्कृतं स च माध्यंदिनसंभवं मुनिम् ।
कुशलं फणिनामधीश्वरः परिपप्रच्छ तपःसमाधिषु ॥ ६३ ॥

तावेवं परिचयलब्धगाढसख्या-
वग्रण्यौ शिवपदपद्मभक्तिभाजाम् ।
त्रैयक्षं नटनमहोत्सवं दिदृक्षू
योगीन्द्रौ कनकसभामगाहिषाताम् ॥ ६४ ॥

इति श्रीयज्ञरामदीक्षितपुत्रस्य रामभद्रयज्वनः कृतौ पतञ्जलिचरिते
तृतीयः सर्गः ।

---

चतुर्थः सर्गः ।

वासवादिभिरथामरैस्तदा चोदितेन भुवि विश्वकर्मणा ।
ताण्डवाय गिरिशस्य निर्मिता तत्र हाटकमयी सभा बभौ ॥ १ ॥
यत्र हेमवलभीविलम्बिनो दिव्यमौक्तिकसरा विरेजिरे ।
सर्वतः सुरगिरेरधित्यका सगता इव नवोडुपङ्क्तयः ॥ २ ॥

यत्र सिन्धुचलशैवलाङ्कितं नाभिपङ्कजमिवेन्दिरापतेः।
गारुडाश्मखचितं हिरण्मयं पुण्डरीकमुपरि व्यराजत ॥ ३ ॥
चञ्चलध्वजपटाञ्चलाञ्चितं यत्सुवर्णशिखरं समुन्नतम्।
अन्वकारि हरिवज्रतो भिया मेरुणा तनुरुहाणि धुन्वता ॥ ४ ॥
वीक्ष्य मां सफलयध्वमक्षिणी भो नरा इति गिरेव शंसति।
या विशङ्कटविटङ्ककोटिभाकिङ्किणीगणघणंघणारवैः ॥ ५ ॥
यद्विशालमणिजालकान्तरादुत्पतन्त्यगरुधूपपङ्क्तयः।
आह्वयन्त इव शैवमीक्षितुं नर्तनोत्सवममर्त्यसुन्दरीः ॥ ६ ॥
यत्र काञ्चनवितानसंयतो नन्दनद्रुकुसुमस्रजा गणः।
अश्रु भाविहरनृत्तदर्शनप्रेमजं मधुमिषादिवोज्झति ॥ ७ ॥
शातकुम्भवलभीसमुन्नतव्रातबद्धमुकुरावलीच्छलात्।
या बिभर्ति नयनानि कौतुकादाभिरूप्यमिव वीक्षितुं निजम् ॥ ८ ॥
द्वारपार्श्वयुगले हिरण्मये गारुडाश्मकदलीवनश्रिया।
या परस्परसमागमार्हयोः शंसतीव घटने मनोज्ञताम् ॥ ९ ॥
आदितोऽन्तत उपोढविभ्रमैर्यत्र मौक्तिकसरैश्चकाशिरे।
हेमतोरणमरीचिवीचयो राजहंसनिचयैरिवागतैः ॥ १० ॥
अत्यवर्तत यदीयकाञ्चनस्तम्भजालमनरालमुन्नतम्।
अप्यहीनगुणभूषमुन्मिषद्वक्रिमाणममरालयं गिरिम् ॥ ११ ॥
देवताप्रतिकृतीर्यदन्तरे शिल्पिना मणिमयीः प्रकल्पिताः।
देवताः प्रथममागता नटं द्रष्टुमैशमिति मेनिरे नराः ॥ १२ ॥
यत्र भान्ति कुरुविन्दनिर्मितत्रोटयो मरतकच्छदाः शुकाः।
ऐष्यदीशगणराट्करस्फुरद्दाडिमग्रहकृतादरा इव ॥ १३ ॥
यत्र यत्र फलपुष्पमण्डितं वृक्षषण्डमरुचद्विनिर्मितम्।
प्रागरण्यमिव नन्दिहुंकृतिस्तम्भितं चरति शंकरे तपः ॥ १४ ॥
भान्ति यत्र मणिकुट्टिमे नरा बिम्बिता भगवतो नटिष्यतः।
संजिघृक्षव इवाल्लयाह्वलेः पारितोषिकविभूषणान्यहीन् ॥ १५ ॥

सिक्तमृष्टतलमुच्छ्रितध्वजं स व्यतीत्य पुरमार्गमायतम्।
तां सभामथ विवेश तादृशीं व्याघ्रपादनुगतः पतञ्जलिः ॥ १६ ॥
कायवानिव तपःसमुच्चयो जङ्गमेव शिवभक्तिरूर्जिता।
स्वात्मबोध इव मूर्तिसंचरस्तावृषी ऋषिगणोऽन्ववर्तत ॥ १७ ॥
यत्पुराणकिटिनापि शौरिणा न व्यलोकि चरणद्वयं प्रभोः।
लोकयेमहि तदेव किंत्विति व्यस्मयन्त मुनयस्तदा मुहुः ॥ १८ ॥
आगताः प्रथममेव भूतले नीलनीरदनिभा गणास्तदा।
विद्रवन्नरवितीर्णमार्गया सर्वतः समचरन्त लीलया ॥ १९ ॥
भूतनाथनटने दिदृक्षया भूतलेऽवतरतां दिवौकसाम्।
उन्मुखक्षितिमयूरवीक्षितो दुन्दुभिध्वनिरभूदथाध्वनि ॥ २० ॥
निर्जरानथ कदाप्यनीक्षितानीक्षितुं भुवि दिवोऽवरोहतः।
दिव्यदुन्दुभिरवावकर्णनात्सन्ननाह कुतुकी नृणां गणः ॥ २१ ॥
अम्बरे ददृशिरेऽथ सुन्दरा हाटकाङ्गदकिरीटकुण्डलाः।
अञ्चलालिखितहंसवाससः पञ्चविंशवयसो दिवौकसः ॥ २२ ॥
तेषु मेषवरवाहनश्चतुःशृङ्गमौलियुगलः शिखोज्वलः।
स्रुक्स्रुवादिवहबाहुसप्तकः प्रत्यदृश्यत हुताशनस्त्रिपात् ॥ २३ ॥
साध्वसेन शिवभक्तसंनिधिं यः स्थितः परिहरंश्चिरादपि।
तं मृकण्डुतनये कृतागसं शाम्भवा ददृशुरम्बरेऽन्तकम् ॥ २४ ॥
मूर्तयामुनतरङ्गवल्लरीविभ्रमावहमहासिभासितः।
पाणिराननमुदग्रदंष्ट्रमप्याचचक्ष इव नैर्ऋतं नृणाम् ॥ २५ ॥
दन्तलग्नजलमर्त्यजाङ्गलक्रूरदूरविवृतास्यकन्दरम्।
आगतस्य वरुणस्य मानवास्तत्र वाहनमवेक्ष्य तत्रसुः ॥ २६ ॥
योऽधिरुह्य पृषतं करे वहन्केतुमत्वरत पांसुकेतनः।[1]
तं नरा निरणयन्धिया स्वया तातमाशरपुरीदहः कपेः ॥ २७ ॥
अभ्रसिन्धुतरिविभ्रमस्पृशा निष्पपात दिवि पुष्पकेण यः।
तं गदोज्वलभुजं महाङ्गदं किन्नराधिपमलोकयन्नराः ॥ २८ ॥

१. 'केतुमत्वरितपांसुकेतनम्' ख.

चन्द्रखण्डकृतचारुशेखरः पुण्डरीकदलपाण्डराकृतिः ।
शूलपाणिरहिजालभूषणः प्रादुरास वृषवाहनो हरः ॥ २९ ॥
राहुरुज्झति मुहुर्निगीर्य मां पालयेति शशिनेव सेवितः ।
आतपत्रवपुषा स चाययौ वज्रपाणिरिभराजवाहनः ॥ ३० ॥
रम्भयास्य चरमोपविष्टया चामरद्वयमधूयताभितः ।
लोलहंसमिथुनान्तरस्फुरत्पद्म चारु विदधे यदाननम् ॥ ३१ ॥
मेनकापि विततार वीटिकां चन्द्रखण्डसुरभिं शचीपतेः ।
तेन सा हि जगृहे मृणालिका दन्तिनेव करिणीकरार्पिता ॥ ३२ ॥
अग्रतस्तदनु सिद्धचारणा वारणाधिपधृतस्य वज्रिणः ।
वृत्रजम्भवलपाकपातनख्यातमस्तुवत बाहुविक्रमम् ॥ ३३ ॥
तच्चिदम्बरपुरं पुरंदरे साकमम्बरचरैः समागते ।
प्राङ्नटेशनटनादहो मुदा तत्र मर्त्यहृदयान्यनर्तिषुः ॥ ३४ ॥
शङ्खमद्दलमृदङ्गदुन्दुभिध्वानसंकथितमुत्सवं तदा ।
वीक्षितुं किमु जनस्य नाविशन्कर्णरन्ध्रमितरेतरोक्तयः ॥ ३५ ॥
रेजिरे दिगधिपा वनौकसो व्याघ्रपाद्गणवराः पतञ्जलिः ।
पौरजानपदमानवास्तदा संगताः कनकसभदन्तरे ॥ ३६ ॥
यावदन्तरनघः पतञ्जलिर्ध्यातुमीशममिमीलदक्षिणी ।
तावदागमनशंसि धूर्जटेः काहलीरणितमाशु शुश्रुवे ॥ ३७ ॥
येन निःसरति काहलीरवस्तत्र वर्त्मनि जना दृशो दधुः ।
लोचनानि निदधुश्च यत्र ते तत्र संन्यधित शंकरः स्वयम् ॥ ३८ ॥
दर्शनोत्सुकसुपर्वपङ्क्त्यहंपूर्विकापरिगताग्रभूमिकम् ।
नन्दिहस्तधृतवेत्रसगमत्रासससंकुचदवेक्षकाङ्ककम् ॥ ३९ ॥
चन्दनद्रवसमुक्षणक्षणक्षिप्तपुष्पचयसिद्धचारणम् ।
सान्द्रितध्वजपताकितान्तरस्निग्धगत्यगरुधूपवल्लिकम् ॥ ४० ॥
मद्दलानुगुणनृत्यदप्सरःपादनूपुरनिनादमेदुरम् ।
संनिधानगतदिव्यमागधप्रस्फुरज्जयजयोक्तिबन्धुरम् ॥ ४१ ॥

आगतेभमुखमूषिकश्रमश्वासतृप्ततदलंक्रियोरगम् ।
आपतद्गुहशिखण्डिताण्डवप्रक्रमिप्रमथडिण्डिमारवम् ॥ ४२ ॥
तुन्दिलैकगणधारितामलच्छत्रमच्छशशिखण्डमण्डितम् ।
उक्षवाहनमुमासमन्वितं तं ददर्श गिरिशं पतञ्जलिः ॥ ४३ ॥
वामपार्श्वगतवारिजेक्षणं दक्षिणेऽम्बुजभुवा कृताञ्जलिम् ।
वन्दितं चरमभागमाश्रितैर्वासवप्रभृतिभिः सुपर्वभिः ॥ ४४ ॥
सर्वतोऽपि सनकादिभिर्मुदा सेव्यमानमृषिभिश्चिरतनैः ।
नारदेन महती नखाञ्चलैर्विध्यता च मृदुगीतवैभवम् ॥ ४५ ॥
नूपुरोरगफणामणिश्रियामङ्कुरैररुणितेन योऽङ्घ्रिणा ।
नूतनातपनिपातपाटलं पश्यतां हृदि निनाय पङ्कजम् ॥ ४६ ॥
भालपावकहुते स्मरे रतावप्यपास्तविहृतौ वृथास्थितौ ।
केलिरत्नमुकुराविवैतयोर्जानुमण्डलमिषाद्बिभर्ति यः ॥ ४७ ॥
व्याघ्रचर्मपरिकर्मशालिनी सक्थिनी गुरुतरे दधाति यः ।
देवदैत्ययुधि दिग्गजेन्द्रयोरागृहीतकवचौ कराविव ॥ ४८ ॥
मण्डलं दिनकरस्य मध्यतो नीयमानमुनिनिर्मितान्तरम् ।
यस्य नूनमपदिश्य काञ्चनं पट्टबन्धमुदरे विराजते ॥ ४९ ॥
भाति यस्य किल कण्ठलम्बिनी शंकराक्षमणिमालिकोरसि ।
कालकूटकलुषीकृता गलान्निर्गतेव निगमाक्षरावली ॥ ५० ॥
कृष्णसर्पकृतचारुकङ्कणैर्यश्चतुर्भिरपि भाति बाहुभिः ।
शक्रवाहनगजः शशिप्रभैरिन्द्रनीलवलयै रदैरिव ॥ ५१ ॥
भासमानभसितत्रिपुण्ड्रया यो ललाटतुहिनांशुलेखया ।
पञ्चबाणवपुरिन्धनानलं लोचनं वहति कुड्मलीकृतम् ॥ ५२ ॥
यस्य मौलिरपि धातृसौधभूनिर्गताभ्रतटिनीनिपातजम् ।
फेनपिण्डमिव वेगवक्रितं कान्तमुद्वहति खण्डमैन्दवम् ॥ ५३ ॥
शंकरोऽथ चलमौलिजाह्नवीवारिपूरणरणत्करोटिकम् ।
दक्षिणेतरकरावलम्बितश्रीशपाणि वृषभादवातरत् ॥ ५४ ॥

सोऽवतीर्य गिरिसन्निभाद्वृषात्साकमद्रिसुतया सविभ्रमम् ।
प्राविशत्कनकसंसदन्तरं पश्यतामिव शरीरिणां मनः ॥ ५५ ॥
तापसप्रमथदेवमानवैः सान्द्रिता विलसति स्म सा सभा ।
शंकरेण मधुनेव चारुणा भूरिभूरुहकरम्बितावनी ॥ ५६ ॥
अञ्जलिस्तबकितेन मौलिना कीर्तिवर्णनकृता मुखेन च ।
जन्मिनो जनिशमार्थमर्थयामासुरीशमचिरेण नर्तितुम् ॥ ५७ ॥
व्याघ्रपादमृषिमीरितस्तवं तं पतञ्जलिमपि स्तवोन्मुखम् ।
वीक्ष्य शीतलदृशा शिवोऽवदन्नर्तनं मम निरीक्ष्यतामिति ॥ ५८ ॥
नर्तनाय गिरिशे कृतत्वरे चत्वरे महति हेमसंसदः ।
मास्तु शब्द इति वेत्रपाणिना सर्वतो जगदतर्जि नन्दिना ॥ ५९ ॥
सिद्धचारणकरान्तनिर्गलन्मुग्धपुष्पनिचये सभान्तरे ।
नन्दितर्जनवशात्कुतूहलादप्यतिष्ठदपसंकथो जनः ॥ ६० ॥
तत्र शंकरकटाक्षचोदितश्चारुमद्दलमवादयद्धरिः ।
यः[1] पयोद इति पुष्कराश्रितो नीलकण्ठनटनोचितध्वनिः ॥ ६१ ॥
कामजिन्नटनकारणेन वा भारतीकुचयुगभ्रमेण वा ।
तत्र तालयुगलीमथाददे पाणिपङ्कजयुगेन पद्मभूः ॥ ६२ ॥
रम्भया हृतरसे रदच्छदे वंशनालमवसज्य वासवः ।
वादनादपि विमोहयञ्जनानाददे किल न वासवस्थितिम् ॥ ६३ ॥
वादय द्रुतमितीव शंसता स्फाटिकाक्षवलयेन दक्षिणे ।
आश्रिता श्रवसि चारुवल्लकी वादनं व्यतनुत प्रियाविधेः ॥ ६४ ॥
आयतेन फणिना जटाभरं मध्यभागमिभचर्मकक्ष्यया ।
बध्नतः प्रियतमस्य नर्तितुं वीक्ष्य संभ्रममुमा स्मितं व्यधात् ॥ ६५ ॥
वीक्षणोचितममांसचक्षुषा नर्तनोत्सवमवेक्षितुं निजम् ।
शंभुना सकलदेहिना तदा दिव्यमक्षि दिदिशे दयालुना ॥ ६६ ॥

---

१. 'यः पयोद इव पुष्कराश्रितो' क.

सं[1]ददर्श सपदि भ्रमज्जटाताडितोडुपटलं तदा जनः ।
व्यालनूपुररणत्पदार्पणन्यञ्चितक्षिति नटेशनर्तनम् ॥ ६७ ॥
घर्मवारिकणकन्दलद्द्रवद्भसपुण्ड्रपरिकर्मितालिकम् ।
कण्ठलम्बितहराक्षमालिकाच्छेदकीर्णमणिहारि किंकरम् ॥ ६८ ॥
मध्यसीम्नि गलिताहिबन्धनव्याकुलद्विरदचर्मकक्ष्यकम् ।
पादताडितधरातलक्रमप्रोन्मिषत्पटत्पटायिताकुलम् ॥ ६९ ॥
मण्डलभ्रमिषु कीर्णजाह्नवीशीकरस्नपितचक्रवालकम् ।
बाहुवेगपवनाभिपूरितक्रन्ददन्तरदिगद्रिकन्दरम् ॥ ७० ॥
उद्धृतैकचरणाम्बुजप्रभासृज्यमानपरिवेषविग्रहम् ।
उत्पलोदरसहोदराम्बिकालोचनान्तवलनैकगोचरम् ॥ ७१ ॥
शाम्बरीयवनिकामथाक्षिपन्सप्रपञ्चमयनर्तनं शिवः ।
द्रागदर्शयत गोणिकासुतं व्याघ्रपादमितरानृषीनपि ॥ ७२ ॥
तेन ते स्वयमिदं जगन्मृषा जानते स परमार्थतः पुनः ।
ब्रह्म तत्परमनादि सच्चिदानन्दलक्षणमनन्तमद्वयम् ॥ ७३ ॥
इत्यवेक्ष्य नटनं जगत्पतेर्भक्तिभारलुलितेन चेतसा ।
तुष्टुवुस्तमखिलाः शरीरिणः श्रेयसा स समयोऽजयच्च तान् ॥ ७४ ॥

नृत्तं तत्फणिपतये स दर्शयित्वा
प्राहेदं प्रणयकिरा गिरा गिरीशः ।
त्वं कृत्वा भुवि पदशास्त्रवार्तिकाना
भाष्यं तद्विवृणु ततो दिवं व्रजेति ॥ ७५ ॥

आज्ञाप्यैवं फणिनमपरान्सोऽनुगृह्याक्षिपातै-
र्गौर्या साकं विधिहरिगणैश्चापि शंभुस्तिरोऽभूत् ।

---

१　'मही पादाघाताद्व्रजति सहसा सशयपद
पद विष्णोर्भ्राम्यद्भुजपरिघरुग्णग्रहगणम् ।
मुहुर्द्यौर्दौस्थ्य यात्यनिभृतजटाताडिततटा
जगद्रक्षायै त्व नटसि ननु वामैव विभुता ॥'

इति महिम्नः स्तवे.

हर्षाश्चर्यैस्तिमितहृदयौ व्याघ्रपाद्गौणिकेया-
वस्तूयेतामृषिभिरनटद्यत्कृते चन्द्रचूडः ॥ ७६ ॥

इति श्रीयज्ञरामदीक्षितपुत्रस्य रामभद्रयज्वनः कृतौ पतञ्जलिचरिते
चतुर्थः सर्गः।

---

पञ्चमः सर्गः।

अथ नटनमवेक्ष्य चन्द्रमौलेरपसरति त्रिदशव्रजे विमानैः।
कलिमलहृतये नृणां मुनी तौ लिलिखतुरादिनटं क्वचित्प्रदेशे ॥ १ ॥
विलिखितमधुनापि संयमिभ्यां शिवमवलोक्य नटं चिदम्बरेशम्।
अपहृतकलुषाः कलौ मनुष्या दधति भवाब्धिविलङ्घनक्षमत्वम् ॥ २ ॥
कतकुलतिलकेन कल्पितानामथ मुनिना पदशास्त्रवार्तिकानाम्।
जगदुपकृतये चकार भाष्यं महदचिरेण पतञ्जलिर्महात्मा ॥ ३ ॥
तमृषिमनुययुस्तदीयभाष्यं पिपठिषवः किल पण्डिताः सहस्रम्।
गुरुपरिचरणादृते कुतो वा भवति परं सुलभा जनेन विद्या ॥ ४ ॥
तदनु यवनिकां वितत्य गूढं वपुरनया च पतञ्जलिर्विधाय।
उपविशत बहिस्तिरस्करिण्याः पठत कृतिं च ममेति तानुवाच ॥ ५ ॥
मम स तु न भवेन्मनःप्रियो मा य इह तिरस्करिणीमुदस्य पश्येत्।
इति पुनरभिधाय पाठनार्थं फणिपतिरूपमृषिः समाललम्बे ॥ ६ ॥
अथ गुरुचरणेन शान्तिमन्त्रान्प्रथममजापिषुरुत्तरं च पाठात्।
अहरहरखिला बुधाः कृती स्याद्गुरुवचसि स्थित एव हीष्टसिद्ध्या ॥ ७ ॥
कृतिपठनमुखे गुरोस्तदन्तेऽप्यतनिपत व्यधिकान्दशप्रणामान्।
बहुमतविनया[1] बुधाः किमन्यत्सुकृतमिहास्ति गुरुप्रणामतोऽपि ॥ ८ ॥
पठति बुधगणे फणीन्द्रभाष्यं करधृतपुस्तकमुच्चकैस्तदग्रे।
सुत इव सुखयास्य वाक्यभङ्ग्या निशमयतामम्मृतद्रवः श्रवःसु ॥ ९ ॥
दुरवगमपदार्थबोधहेतोरमृतरुचेरिव चन्द्रिकाविशुद्धा।
भणितिरहिपतेर्बुधावलीनामपनयति स्म तमस्तदा समस्तम् ॥ १० ॥

---

१. 'बहुमतविबुधा बुधाः' ख.

अहमहमिकया स्थितं क्षिपद्भिः परिचितगौतमजैमिनिप्रबन्धैः।
सुमतिभिरनुयुक्तमर्थमुक्त्या झटिति सयुक्तिभिरिद्धया विवव्रे ॥ ११ ॥
किमपि विघटयन्किमप्यनुज्झन्किमपि समुज्ज्वलयंश्च वार्तिकेषु।
नृप इव भटमण्डलेषु भाष्ये व्यहरत राज्य इवास्य वाङ्निगुम्फः॥ १२ ॥
तुहिनशिखरितुङ्गशृङ्गपातक्षणरणदभ्रनदीतरङ्गभङ्गीम्।
परिभवति पतञ्जलेः पठन्तो वचसि दधुः किल विस्मयं तदा ते ॥ १३॥
अधिफणिकृति तावदेव पेठुर्विलसति यावति वासरूपसूत्रम्।
विनयभरजुषो विचक्षणास्ते बहुतपसां हि भवेत्तदन्तपाठः ॥ १४ ॥
प्रतिपुरुषमिहाननैः कियद्भिर्युगपदयं वदतीति विस्मयेन।
अपहृतमनसोऽथ तेऽपनिन्युः सपदि तिरस्करिणीं तदीक्षणाय॥ १५ ॥
विवृतफणसहस्रमुग्रदंष्ट्रं[1] क्षितितलकुण्डलितार्धभोगभीमम्।
प्रसृतपरिहृतोभयाग्रजिह्वं तरलदृशं तमथ व्यलोकयंस्ते ॥ १६ ॥
दधुरथ सदृशीस्तनूः स्मरेण त्रिपुररिपोरलिकाक्षिलक्षितेन।
अपि दश विदुषां शतानि पुंसो गुरुवचनव्यतिलङ्घनं ह्यनर्थः॥ १७ ॥
फणिपतिरभिवीक्ष्य तादृशांस्तान्कथमिदमित्यनुचिन्त्य यावदास्त।
परिसरमुपसृत्य तावदेकः प्रणमितमौलिरिदं भयादवादीत् ॥ १८ ॥
फणिवर भगवन्प्रसीद मह्यं बहिरगमं जलमोचनाय यावत्।
विधुतयवनिकाः कृतापराधा बत मम तावदिति स्थिताः सतीर्थ्याः॥ १९ ॥
इति गदितगिरं शशाप कोपाद्यदविहितोत्तरशान्तिमन्त्रपाठः।
बहिरसि गतवान्पठन्मदीयां कृतिमपि तद्भव राक्षसोऽज्ञसेति॥ २० ॥
प्रणिपतनगुणस्तवप्रबन्धैः फणिपतिरस्य कथंचन प्रसन्नः।
धृतजटिलमनुष्यमूर्तिरित्थं तमवददापदमुत्क्षिपन्निवोक्त्या ॥ २१ ॥

मा भज वत्स विषादं मत्वा कर्माणि जगति चित्राणि।
कथमिव मे त्वयि कोपः कथमिव शापश्च तादृशोऽपरथा ॥ २२॥
निष्ठायां किं रूपं पचेरिति त्वं बुधान्पृच्छ।
पक्वमिति वदति यस्तं मम कृतिमध्याप्य मुच्यसे शापात् ॥ २३ ॥

---

१. 'विवृतफणमुदग्रमुग्रदष्ट्रम्' क.

व्याकरणमहाभाष्यं मत्कृतमखिलं मम प्रसादात्ते ।
स्फुरतु यथेष्टं याहीत्युक्त्वा तमृषिस्तिरोदधे सहसा ॥ २४ ॥
सूत्राणि योगशास्त्रे वैद्यकशास्त्रे च वार्तिकानि ततः ।
कृत्वा पतञ्जलिमुनिः प्रचारयामास जगदिदं त्रातुम् ॥ २५ ॥
गोनर्दाख्यं देशं प्राप्य नमस्कृत्य गोणिका जननीम् ।
तस्यां त्रिदिवगताया तस्थौ शेषः स्वयं स मुनिः ॥ २६ ॥
अथ स पतञ्जलिशिष्यो रक्षो भूत्वाधिरुह्य वटमेकम् ।
पचिरूपं निष्ठाया पृच्छन्पचितमिति वादिनोऽखादीत् ॥ २७ ॥
अथ बहुषु गतेषु वत्सरेषु द्विजमुपकण्ठमुपेयिवांसमेकम् ।
पुनरपि[1] तदपृच्छदेव रक्षो झटिति स पक्वमिति स्फुटं जगाद ॥ २८ ॥
द्विजगिरमवकर्ण्य कर्णरम्यामवतरति स वटात्तदाशु रक्षः ।
अयमुदयति शापमोक्षकालो मम गुरुणोक्त इति प्रहृष्यदन्तः ॥ २९ ॥
द्विजवर वद को भवान्कुतस्त्यस्तव किमिहागमने प्रयोजनं वा ।
कृतमतिरसि पाणिनीयशास्त्रे यदि च रुचिः पठ मत्फणीन्द्रभाष्यम् ॥ ३० ॥
इति कथयति रक्षसि प्रहृष्यन्निदमगदीदहमस्मि चन्द्रगुप्तः ।
उपगम इह मेऽयमुज्जयिन्याः पठितुमहीश्वरभाष्यमन्तिके ते ॥ ३१ ॥
इति गदितवते द्विजाय तस्मै फणिपतिभाष्यमशेषमाचचक्षे ।
शुचिरनिशमसविशन्ननश्नंस्तदपि च मासयुगेन सोऽध्यगीष्ट ॥ ३२ ॥
प्रतिदिवसमसौ पपाठ यावद्भुजगकृतो किल रक्षसः समीपे ।
अपचितवटपत्रजालगर्भे नखशिखरेण दृढं लिलेख तावत् ॥ ३३ ॥
अथ[2] पृथुलशिरोणुमात्रकण्ठं चलदतिशुष्कपिचण्डमायतोरु ।
कृसिमभृदकृशाङ्घ्रिपाणि रक्षो वपुरपहाय स दिव्यमूर्तिरासीत् ॥ ३४ ॥
व्रज सुखमवनौ कुरु प्रचारं भुजगकृतेरिति[3] तं स शेषशिष्यः ।
दिवमगमदुदीर्य सोऽपि बद्ध्वा वटदलसचयमंशुके प्रतस्थे ॥ ३५ ॥

---

१. 'पुनरपि तदपृच्छदेप रक्षो' क. २ 'अथ पृथुशिथिलशिरोणुमात्रकण्ठं' क.
३. 'भुजगकृतेरिति स शेषशिष्यः' ख.

नखलिखितपतञ्जलिप्रबन्धं वटदलजालकमुत्तरीयबद्धम्।
शिरसि दधदभीष्टलाभहृष्टः स निववृते वनवर्त्मना मनीषी ॥ ३६ ॥
पथिकपरिगृहीतवृक्षमूलस्थलमचलत्खगमप्रवृत्तवातम्।
दिशि दिशि विसृतातपोष्म भेजे पथि चलता किल तेन मध्यमाह्नः॥३७
तदनु पथि चलन्स चन्द्रगुप्तः सरितमवैक्षत कामपि प्रसन्नाम्।
विकचकमलगर्भरेणुगन्धी श्रममपहन्ति नृणां यदूर्मिवातः ॥ ३८ ॥
बभुरनवरतं यदम्बुलोलेष्वलिकलभाः कमलेषु संचरन्तः।
वसतिषु शयितं श्रियो जनन्याः प्रभुमिव पञ्चशरं गवेषयन्तः ॥ ३९ ॥
अदधुरिव वनानि सल्लकाना[1] परिमललोलदलिव्रजच्छलेन।
निगलमतरलेतर यदूर्मौ झटिति नियन्त्रयितुं दृशो जनानाम् ॥ ४० ॥
कुमुदमुकुलजालकं यदीये पयसि बभौ करिदन्तकान्तकान्ति।
पथिकतरुणदुर्दशानिमित्तं पतितमिवोडुकदम्बमम्बरान्तात् ॥ ४१ ॥
अविरलमसितं यदम्बुपूरे कुवलयकुड्मलमण्डलं चकाशे।
पथिकयुवविहन्तुरङ्गजस्य[2] स्थितमिव जालमकीर्तिकन्दलानाम् ॥ ४२ ॥
पयसि विहरतोऽनिशं यदीये कलनिनदः कलहंसमण्डलस्य।
श्रुतिषु परिणनाम पान्थयूना कुपितमनोभवयोधसिंहनादः ॥ ४३ ॥
प्रसृमरमवकर्ण्य चक्रवाकप्रणदितमध्वनि तीरभाजि यस्याः।
विनमितमुदितस्मितं तरुण्या वदनमलुम्पत वल्लभस्य धैर्यम् ॥ ४४ ॥
परिणतिविगलत्कदम्बपुष्पस्तबकपरागकरम्बितां यदूर्मिम्।
न पुनरुपससार दावबुद्ध्या वनकलभस्तृषितोऽपि वारि पातुम्॥ ४५॥
शिखरितटनिषण्णमेणशावं कमपि यदम्बुनि लम्भितानुबिम्बम्[3]।
ततकरकमलं गृहीतुकामा प्रतिहसिता[4] शबरी परं ललज्जे ॥ ४६ ॥
तटरुहसहकारमञ्जरीणा पयसि मुहुः प्रतिबिम्बितानि[5] यस्याः।
मधुकरकुलमुज्झितारविन्दस्पृहमसकृद्भ्रमयाबभूवुरुच्चैः ॥ ४७ ॥

---

१. 'हल्लकानाम्' ख. २. 'पथिकयुवतिहन्तुरङ्गजस्य' क. ३ 'लम्बितानुबिम्बम्' क.
४. 'परिहसिता' क. ५ 'परिबिम्बितानि' क.

यदुपवनरसालवाटिकाया मणितमनुत्सुकया भिया विधातुम् ।
अरमत सुदृशा कयापि जारो मदकलकोकिलकूजितानि शृण्वन्॥ ४८॥
ततमपि मणितं तटे यदीये तरुविटपाग्रकलक्कणत्कपोते ।
इह विहरति जारयुग्ममन्तर्निचुलनिकुञ्जभुवीति न व्यनक्ति ॥ ४९ ॥
कमलदलदृशा विटं कयाचित्कृतसमयं यदुपान्तनीपवन्याम् ।
व्यवहितविवृतोऽसकृत्कलापी तरुषु कचभ्रमकृन्निनाय दूरम् ॥ ५० ॥
स्फटिकनिभविसर्पिचन्द्रपादे कुवलयसौरभचोरगन्धवाहे ।
दयिततमपदानि जारिणीभिर्निशि निशि यत्पुलिने गवेषितानि ॥ ५१॥
व्रतिमतिततिभिः प्रतानिनीनामिह विजहार चिराय जारयुग्मम् ।
इति निजकुहरप्रकीर्णभूषामणिभिरुवाच यदीयतीरकुञ्जः ॥ ५२ ॥
करचरणपदानि यत्तटान्ते नवपुलिने निहितानि कुञ्जगर्भे ।
दयितसहचरीजनाय तस्याश्चतुरमचक्षत जारकेलिभेदम् ॥ ५३ ॥
विदितनिजपथेऽपि शालिगोपीं कथमिति पृच्छति पान्थयूनि मार्गम् ।
अयमिति वि[1]हितस्मिता च सास्मै निरदिशदिक्षुवणं यदन्तिकस्थम् ५४
स्तनभरमभिवीक्ष्य शालिगोप्याः पथिकयुवा श्रम इत्यशेत कुञ्जे ।
अविरलपुलकस्तनी वितेने दिशि दिशि सा च दृशौ[2] तटे यदीये ॥ ५५॥
पथिकयुवरदक्षताधरा यत्तटभुवि काचन शा[3]लिगोपकन्या ।
सहचरमतिसदधे[4] चटूक्त्या न दशति केलिशुको न मां सखीति ॥ ५६ ॥
सलिलविहरमाणसारसाक्षीकुचतटकुङ्कुमपङ्किला यदूर्मिः ।
पथिकयुवजनस्य पश्यतोऽन्तःकरणमरञ्जयदद्भुतं न तत्किम्॥ ५७ ॥
तटमधिवसतो विटस्य तन्वीं सपदि यदम्बुनि मज्जतीमवेक्ष्य ।
[5]जलमजनि मनो मृषा न चेदं यदियममज्जदिहापि साङ्गभूषा ॥ ५८॥
स्तनशिखरितटे तलोदरीणामतिकठिने पतिता दृशो विहाय ।
समजनि हृदयेषु हन्त पीडा तरुणजनस्य तटस्थितस्य यस्याः ॥ ५९ ॥

---

१. 'विहितस्मिता च वामे' क. २. 'दृशस्तटे यदीये' क. ३ 'शालिगोपकान्या' क. ४. 'इति सदधे' ख. ५. जल=जड 'किमसुभिर्गलितैर्जड मन्यसे मयि निमज्जतु भीमसुतामनः । मम किल श्रुतिमाह तदर्थिका नलमुखेन्दुपरा विबुध स्मरः ॥' इति नैषधकाव्ये.

अहरदधररागमाससाद स्तनतटकुङ्कुममाममर्श काञ्चीम् ।
जघनघटनया चचाल यस्याः सलिलभरः सुकृती नितम्बिनीनाम्॥१०॥
गिरितटकठिनोपलाभिघातस्खलनझलज्झलितोरुनिर्झरा या ।
प्रकटसहचरापराधरोपक्षणपरुषोक्तिरिवाङ्गना बभासे ॥ ११ ॥
अथ स बुधवरः श्रमेण तस्याः किमपि निपीय जलं तटद्रुमूले ।
दलचयमुपधाय वस्त्रबद्धं लिखितपतञ्जलिवाङ्मयं निदद्रौ ॥ १२ ॥

तावन्निद्रावशमयमगाद्यावदस्योपधानं
वत्सः कश्चिद्वटदलचयग्रासलोलश्चकर्ष ।
उत्थायाथ ग्रसनचटुलादक्षिपद्वत्सवक्त्रा-
त्तद्दन्तालिक्षतलिपि हठात्केपुचित्तद्दलेषु ॥ १३ ॥

इति श्रीयज्ञरामदीक्षितपुत्रस्य रामभद्रयज्वनः कृतौ पतञ्जलिचरिते
पञ्चमः सर्गः।

---

षष्ठः सर्गः ।

बुधं ततः सिन्धुतटे प्रतिष्ठितं बुभुक्षितं काचिदवेक्ष्य तं वधूः ।
नवं वहन्ती नवनीतमाययौ करेण पीयूषमिवादिमोहिनी ॥ १ ॥
विजेतुकामस्य विलासिनीगणं मनोभुवः खड्गलतां मनोहराम् ।
चमत्कृतां चम्पकपुष्पमालया कयापि वेणीकपटेन बिभ्रतीम् ॥ २ ॥
अभिप्रपन्नैरभितो मधुव्रतैः सरोजकिञ्जल्कपरागशङ्कया ।
कचापदेशाद्दधती करम्बितं चिराय सिन्दूररजोधिकारुणम् ॥ ३ ॥
निशाकरार्धे निटिलेन निर्जिते तदीयकीर्तिप्रथमाङ्कुरोपमाम् ।
ललन्तिकामौक्तिकपङ्क्तिमुज्ज्वलां ललाटपट्टे ललिते वितन्वती ॥ ४ ॥
दृशा ललाटस्थितया महेश्वरो ददाह यं दर्शितबाहुविक्रमम् ।
प्ररोहयन्ती प्रसवास्त्रमेव तं विचित्रयेवालिकचित्रकश्रिया ॥ ५ ॥
क्षमे न किं वा पुरुषस्य पश्यतः प्रदातुमावां हृदये धनंजयम् ।
इतीव कर्णव्यतिलङ्घनोद्यते दृशौ दधाना दलिताम्बुजद्युती ॥ ६ ॥

---

१. 'बुधस्ततः' क. २. 'नवनीतमादधौ' ख. ३. 'विलासिना गण' ख.

रुचिं सुवर्णद्युतिभूषणस्थिता बबन्ध मुक्तावलिरुज्ज्वला ययोः ।
तयोर्विशेषं गमिता कपोलयोस्तमालपत्राङ्कुरलेखनश्रिया ॥ ७ ॥
द्विजान्विशुद्धानपि नित्यमाश्रयन्नवाधरः पल्लवविभ्रमं जहौ ।
इतीव नासाभरणस्य रश्मिभिर्निबध्नती रागभृतं तमायतैः ॥ ८ ॥
शरीरसौन्दर्यपयोधिजन्मना गलेन पुष्पायुधवीरकम्बुना ।
धृतस्य हारस्य कुचेभकुम्भयो रुचा दिशन्ती करशीकरभ्रमम् ॥ ९ ॥
भृशं गभीर हृदयं हृदान्तरं विगाहमानेन मनोजदन्तिना ।
बहिष्प्रकाशं गमितौ पृथून्नतौ चिराय कुम्भाविव बिभ्रती कुचौ ॥ १० ॥
प्रविष्टनाभीबिलमन्मथोरगस्फुटेन्द्रनीलोद्गतकान्तिकन्दलैः ।
अभिन्नया मेचकरोमलेखया कृशेऽवलग्ने कृतरामणीयका ॥ ११ ॥
विलोचनान्याक्षिपता विलासिना सलीलमन्यत्र समर्पितान्यपि ।
कलेन काञ्चीरणितेन बिभ्रती मनोजपीठं जघनस्य मण्डलम् ॥ १२ ॥
युवप्रपञ्चे युगपत्समुज्झितुं शरान्कराभ्यामपि शम्बरारिणा ।
निषङ्गयुग्मं निदधे यदार्जितं तदेव जङ्घाकपटेन बिभ्रती ॥ १३ ॥
तरङ्गवेगेन तटान्तमागतैः स्थलारविन्दं यदि सिन्धुमौक्तिकैः ।
वृताञ्चलं कैरपि तेन बिभ्रती कृतोपमानौ चरणौ नखोज्ज्वलौ ॥१४॥
कलक्कणत्काञ्चननूपुरोज्ज्वलं समाह्वयन्तं सहसेव मन्मथम् ।
अलक्तकश्रीजितरक्तसंध्यकं पदक्रमं चारु शनैर्वितन्वती ॥ १५ ॥
ततः सपात्रं नवनीतमङ्गना धरातले तस्य निधाय पार्श्वतः ।
प्रणम्य बद्धाञ्जलिरित्थमर्थयांबभूव भक्तिप्रतिपन्नया गिरा ॥ १६ ॥
बुधेन्द्र पूर्वं बहवस्तपोधनाः फलाम्बुदर्भाजिनबर्हिरर्पणैः ।
मया कुमार्या परितोषिता भृशं प्रसादसर्वस्वमिदं वचोऽवदन् ॥ १७ ॥
इहागमिष्यत्यखिलं पतञ्जलेरधीत्य भाष्यं किल कश्चन द्विजः ।
तदीयशिष्यादचिरेण रक्षसः प्रणम्य तं पूजय पद्मलोचने ॥ १८ ॥

---

१. 'सुवर्णश्रुतिभूषणास्थिता' इति क-पुस्तकपाठः साधुरिति भाति. २. 'न चाधर पल्लवविभ्रमं जहौ' इति ख-पुस्तकपाठ एव शुद्धो भाति ३. 'विलोचनान्याक्षिपत' क; 'विलोचनान्याक्षिपतो' ख. ४. द्वितीयः पाद क-पुस्तके नास्ति

प्रचारयिष्यन्कृतिमात्मनः स्वयं पतञ्जलिस्तद्वपुषाभवद्भुवि ।
स पूजितस्त्वां परिणीय कन्यकां [1]गरीयसि श्रेयसि वर्तयिष्यति ॥१९॥
इतीरिता योगिजनेन शृण्वती गिरं द्विज तं मृगयेऽधुनाप्यहम् ।
स चेद्भवाञ्जन्म कृतार्थमेव मे त्वयि प्रसन्ने किमु दुर्लभं मया ॥ २० ॥
गिरा प्रपञ्चैरथवा किमीदृशैः पुनाति ते दर्शनमेव देहिनः ।
तथापि भोक्तुं नवनीतमाहृतं मया प्रसादं कुरु दृश्यसे श्रमी ॥ २१ ॥
चिरादिति प्रार्थयमानया तया समाधिदृष्टागमिपूर्वचेष्टितः ।
कृतस्मितस्तन्नवनीतमर्पितं यथेष्टमश्नन्स जहौ परिश्रमम् ॥ २२ ॥
तदिङ्गितैरेव विजानती द्विज पतञ्जलेराकृतिभेदमागतम् ।
तमब्रवीदुद्वह मा कृपानिधे तुरीयवर्णप्रभवामपि त्विति ॥ २३ ॥
जगाद तामेवमुदीरितो द्विजो मनोरथो मानिनि ते फलोन्मुखः ।
उदूह्य वर्णत्रयकन्यका यतो विवोढुमीहेऽन्तिमवर्णजामिति ॥ २४ ॥
तदुक्तिमाकर्ण्य गृहं निनाय सा तमुल्लसद्यौवनमिन्दुसुन्दरम् ।
तया ततस्तज्जननीवितीर्णया समं पुरीमुज्जयिनीं जगाम सः ॥ २५ ॥
वटद्रुपर्णस्थितवर्णमेलनादथैष भाष्यं निखिलं पतञ्जलेः ।
लिलेख वत्सक्षतदुर्ग्रहाक्षरे स्थले क्वचित्कुण्डलनामकल्पयत् ॥ २६ ॥
निजे गृहे तत्र निविश्य पाठयंस्तदुज्जयिन्या फणिभाष्यमाश्रुवान् ।
निनाय कालं नियमेन स द्विजः प्रियासु तुल्यं चतसृष्वपि स्थितः ॥ २७ ॥
[2]तदीयपातञ्जलभाष्यपाठनप्रभावसंदर्शनकौतुकादिव ।
तदा वसन्तस्तरुपुष्पपल्लव[3]प्रसञ्जनव्यञ्जितमूर्तिराययौ ॥ २८ ॥
नवप्रवाला नृपकेलिकानने बभासिरे बालरसालवल्लिषु ।
जगत्त्रयीजेतुरनङ्गभूभुजो भुजप्रतापा इव दृष्टिगोचराः ॥ २९ ॥
वनेषु शाखाः सहकारभूरुहामदर्शयन्त प्रतिपर्व कुड्मलान् ।
चिरोज्झितेषु व्यसनोन्मुखस्मरप्रविद्धगात्रोत्पतितानिवाशुगान् ॥ ३० ॥

---

१. 'वरीयसि श्रेयसि' क. २. 'तदीयपातञ्जलभाष्यपाठनापभाव' क. ३ 'प्रसाधनव्यञ्जित' इति क.

मधुव्रते गायति मञ्जु पार्श्वतः श्रमाम्बुतुल्यं मकरन्दमुज्झती[1] ।
पुरो ननर्तेव पिकस्य पश्यतः समीरलोला सहकारमञ्जरी ॥ ३१ ॥
क्षणं भ्रमन्व्योम्नि शनैः क्षुपाञ्चले पदं वितन्वन्परितो विलोकयन् ।
समीरधूतामपि चूतमञ्जरी न चञ्चरीको विजहौ चिरं पिबन् ॥ ३२ ॥
मृगीदृशा मानपरिग्रहानयः प्रियेषु मा भूदिति शम्बरद्विषः ।
अनङ्गभावादिव शासनाक्षरं पिकस्य कण्ठादुदियाय पञ्चमः ॥ ३३ ॥
रसालशाखामवलम्ब्य कश्चन द्विजश्चिरायाधिजगे कलस्वरम् ।
मनोजतत्त्वोपनिषद्भिरस्तथा प्रियेषु मानं सुदृशो यथा जहुः ॥ ३४ ॥
द्विजो[2]ऽपि रागं प्रतिपद्य चक्षुषो रजस्वलामेव रसालमञ्जरीम् ।
अचुम्बदेको मधुपप्रिया[3]मिति स्मितं वितेने कुरबस्य कोरकः ॥ ३५ ॥
रसेन गन्धेन रजोभिरुज्ज्वलैरुपागतं सा तमुपाचरत्तथा ।
अचुम्बदाजिघ्रदमृक्षदादराद्यथा द्विरेफः कुरवस्य मञ्जरीम् ॥ ३६ ॥
मनोरमां चम्पकमञ्जरीं वने न षट्पदो वीक्षितुमेव चक्षमे ।
कथं नु दृष्ट्यापि सुवर्णसंभवा गृहीतुमर्हा मधुपस्य गायतः ॥ ३७ ॥
दिशत्यशोके कुसुमानि सुभ्रुवामकल्पताङ्घ्रिर्नवयावकाङ्कितः ।
नवागसां नादितरत्ननूपुरो विलासिनामाहननाय केवलम् ॥ ३८ ॥
युवा वियोगेऽभिनवानि केसरे स्थितानि पुष्पाणि दृशा निरीक्षितुम् ।
न चक्षमे यानि वधूकचार्पितान्यमूनि जिघ्रन्प्रजहर्ष संगमे ॥ ३९ ॥
रतान्ततान्तस्य रहो विलासिनीकचार्पितं केसरदाम कामिनः ।
अभीक्ष्णमाघ्रातमभूच्छ्रमापहं तदीयबिम्बाधरचुम्बनादपि ॥ ४० ॥
चकास्ति कीदृक्कियदत्र सौरभं नवेषु पुष्पेष्विति बोद्धुमिच्छवः ।
अशोकपुन्नागरसालमल्लिकावनेषु संचेरुरिवालिकुञ्जराः ॥ ४१ ॥
वसन्तसंसर्गवती वनस्थली श्लथालका षट्पदजालकश्रिया ।
रराज मल्लीमुकुलैरितस्ततो विहारकीर्णैरिव हारमौक्तिकैः ॥ ४२ ॥

---

१ 'मकरन्दमुज्झति' क-ख. २. अय श्लोकः ख-पुस्तके नास्ति. ३. 'मधुपप्रियाम्' इत्येव पुस्तकद्वयेऽपि.

क्वचित्सितं निर्मलमल्लिकारुचा क्वचिच्च गौरं नवचम्पकश्रिया ।
परत्र कङ्केलिदलत्विषारुणं त्रिवर्णमुद्यानमभूत्किमद्भुतम् ॥ ४३ ॥
वपुर्विलिम्पन्सहकाररेणुना प्रफुल्लमल्लीपरिरम्भसभ्रमी ।
निपीतकङ्केलिलतादलाधरश्चचार मन्दं किल दक्षिणोऽनिलः ॥ ४४ ॥
रतान्तघर्मोदकबिन्दुसुन्दरं मुखाम्बुजं मुग्धदृशा प्रशसितः ।
सुवर्णजालान्तरतः समागतश्चुचुम्ब धन्यो मलयाचलानिल. ॥ ४५ ॥
शरैः किमन्यैरिह शम्बरद्विषो वियोगिना प्राणवियोगकर्मणि ।
यतो परार्थोऽजनि फुल्लमल्लिकावनान्तसचारसुगन्धिराशुगः ॥ ४६ ॥
न मध्यमह्नाय बबन्ध कक्ष्यया न चाददे कार्मुकमाहवोद्भटः ।
वसन्तमन्दानिलयोगमात्रतो जिगाय कामो जगतामपि त्रयम् ॥ ४७ ॥
वधूजनानां परिचारिका मधौ वियोगिनामप्यवियोगिनामपि ।
प्रवालशय्या किल पर्यकल्पयन्नदीनिकुञ्जेषु च नर्मवेश्मसु ॥ ४८ ॥
तव स्वभावं तरलेक्षणे विदन्न जातु कान्तो मधुमत्यवर्तत ।
इतीरिते प्रोषितवल्लभा सखीजनेन रोमाञ्चमधादुरोजयोः ॥ ४९ ॥
समागतस्ते प्रिय इत्युवाच सा कृतं किमस्यै हृदि पारितोषिकम् ।
वदेति सख्या गिरमेव शृण्वती वधूरनङ्गज्वरमत्यजन्मधौ ॥ ५० ॥
सखि प्रगल्भो मधुरेष दृश्यते गतो य इत्यर्धमुदीर्य जालके ।
निधाय दृष्टिं सहसा नितम्बिनी स्मितेन सख्यै वचनं समापयत् ॥ ५१ ॥
चलद्रसालस्तबकोऽत्र वर्तते वसन्त इत्याशु समेयुषि प्रिये ।
पपात पश्चात्सुदृशो दृगञ्चलं सखीषु केलीसदने तु पूर्वतः ॥ ५२ ॥
वधूर्वसन्ते बिसकङ्कणं करे दृशोरुदश्रु स्तनयोरुशीरवत् ।
प्रियस्य दूरादुपसेदुषो गृहं शरीरमेवाकुरुतो पदापदे ॥ ५३ ॥
यथा सितक्षामकपोलमाननं निरीक्ष्य नार्या नितरां ननन्द सः ।
सपत्रलेखं दयितः सकुङ्कुमं तथा न देशान्तरतः समागतः ॥ ५४ ॥
समाप्तिहीनाधरबिम्बचुम्बनामनुज्झितोरोजदृढोपगूहनाम् ।
निशां निनीषन्नपि सल्लपन्स्थितो मधौ प्रवासी पतिरेत्य कान्तया ॥ ५५ ॥
नृणां तृतीयप्रथमार्थसाधने प्रशस्तमाराध्य मधुं स भूसुरः ।
मखेन यष्टव्यमयष्ट दैवतं नयेन दाराश्चतुरोऽभ्यरीरमत् ॥ ५६ ॥

प्रियाश्चतस्रः प्रतिपेदिरे शनैः शरत्प्रसन्नामिव चन्द्रिकां दिशः ।
द्विजस्य हर्षार्णववृद्धिदायिनी नितान्तरम्यामथ दौहृदश्रियम् ॥ ५७ ॥
बभूवुरासां श्रमवारिबिन्दवो मुखेषु केलीकमलग्रहादपि ।
विहारिकारण्डवपातिताः कणास्तरङ्गिणीनां सरसीरुहेष्विव ॥ ५८ ॥
तदा तदीयाः स्तनवश्चकाशिरे परिष्कृता दौहृदपाण्डिमश्रिया ।
शशाङ्ककान्त्येव शरत्प्रसन्नया करम्बिताः काश्चन सालभञ्जिकाः॥५९॥
रसान्तराद्[1]प्यवकृष्य केवलं मनो बबन्धुर्हृदि योषितस्तदा ।
निसर्गतः सर्गविधौ हि वेधसः प्रियाप्रिये वस्तुषु न व्यवस्थिते॥६०॥
क्रमेण तासामसितभ्रुवां घनाः पयोधरा नीलमुखाश्चकाशिरे ।
सुरेन्द्रनीलोपलमुद्रिताञ्चला मनोभवार्हा इव हेमसंपुटाः ॥ ६१ ॥
तनुस्फुरत्पाण्डिमचण्डिकारुचा कलाधरे गर्भगते निरूपिते ।
तमस्विनी तत्कुतुकादिवागतां बभार रोमावलिमङ्गनागणः ॥ ६२ ॥
विनेतुमेकं बलिमेव चक्षमे समुत्थितं विष्णुपदं पुरा युगे ।
इति स्थितामप्यवधूय तत्तुलां वधूवलग्न्यान्यहरन्वलित्रयम् ॥ ६३ ॥
ततो मुहूर्ते रुचिरे द्विजोत्तमैः पुरन्ध्रिभिः पूरितचत्वरे गृहे ।
स शास्त्रदृष्टेन पथा मृगीदृशा समन्वतिष्ठत्समयोचिताः क्रियाः ॥६४॥
कृतैर्यथाचोदितमेव कर्मभिर्विरेजिरे विप्रवरस्य सुभ्रुवः ।
कृषीवलस्यौषधयः प्ररोपिताः स्वकाललब्धैरिव वर्षवारिभिः ॥ ६५ ॥
दिनेषु ताः सत्पुरुषोदयोचितेष्वरालकेश्यो विदुषां शिखामणेः ।
क्रमात्कुमारान्कमनीयतेजसो मणीनिवासोषत सिन्धुशुक्तयः ॥ ६६ ॥

स पुत्राणां तेषां जननसमयार्हाणि विधिव-
द्वितन्वन्कर्माणि द्विजकुलकृताशीः परिपदि ।
यथा यस्मै यावद्यदभिलषितं देयमददा-
त्तथा तस्मै तावत्तदुपनमितं स्वेन तपसा ॥ ६७ ॥

इति श्रीयज्ञरामदीक्षितपुत्रस्य रामभद्रयज्वनः कृतौ पतञ्जलिचरिते
षष्ठः सर्गः ।

1. 'दप्यवकर्ष्य' क, 'दप्यपकृष्य' ख.

सप्तमः सर्गः ।

विदधत्क्रियाः शुभतराः परस्परं
　प्रविभिन्नवर्णविलसत्परिग्रहः ।
निगमश्चतुर्भिरिव साधुभिः स्वरै-
　स्तनयैरथ द्विजवरो व्यरोचत ॥ १ ॥

यमजीजनत्प्रथमवर्णकन्यका
　तनयं द्विजो वररुचिं तमाख्यया ।
स्वयमाजुहाव कृतवंशजन्मनः
　पदशास्त्रवार्तिककृतः पवित्रया ॥ २ ॥

यमसूत चन्द्रमिव सिन्धुवीचिका
　नृपकन्यकास्य विततान नाम सः ।
भुवि सोऽयमर्क इव विक्रमे भवे-
　दिति विक्रमार्क इति विश्रुतं भुवि ॥ ३ ॥

वचसैव भर्तुमयमर्हति स्वयं
　वसुधा नयानयविभागचुञ्चुना ।
इति वैश्यजातनुभुवः स भट्टिरि-
　त्यभिधा चकार भटिधातुवाच्यवित् ॥ ४ ॥

धरणीं बिभर्ति दशभिः शिरःशतैः
　प्रलये हरिष्यति च यो विषार्चिषा ।
फणिनोऽस्य भर्तृहरिरित्यभिख्यया
　स समाह्वयच्चरमवर्णजासुतम् ॥ ५ ॥

सुदृशां तदा सुतमुखानि दृष्टयो
　मधुरस्मितानि मुहुरालुलोकिरे ।
कमलानि गाढकुतुकाः कुमुद्वती-
　तरलालिपङ्क्तय इव क्षपात्यये ॥ ६ ॥

चरणं करद्वयगृहीतमेककं
　शिशुभिर्निवेशितमशोभतानने ।

शशिनि प्रपन्नमिव पूर्वमिन्दिरा-
कमलद्वयेन विधिपीठपङ्कजम् ॥ ७ ॥
शिशवस्तदा ददृशिरे महीतले
नमिताननाः सुलभजानुचंक्रमाः ।
फणिनं सहस्रवदनं प्रशासितु
स्वधियेव विश्वमधरं विविक्षवः ॥ ८ ॥
अकृताहिरज्जुगिरिमन्थसग्रहं
प्रबलासुरामरकुलानपेक्षणम् ।
अपकालकूटमयमादृतः पपौ
सुतजल्पितामृतरस स भूसुरः ॥ ९ ॥
जननीकराग्रमवलम्ब्य पाणिभि-
र्भवनाङ्गणे यदवलन्त बालकाः ।
क्षितिमण्डले स किल तस्य पुत्रिता-
यशसामभूद्दिगवलम्बनक्रमः ॥ १० ॥
जनकस्ततो विहितमक्षरक्षण-
ग्रहणं निरीक्ष्य शिशुभिस्त्रिहायणैः ।
सति यौवने कथममी न भाविनः
श्रुतवन्त इत्ययममोदत स्वयम् ॥ ११ ॥
उपनीय तानुपदिदेश स श्रुती-
स्तनयं सुबुद्धिमपि तुर्यमन्तरा ।
स्वयमेव तास्तमचिरात्तु वव्रिरे
चतुरं विलासिनमिवान्ययोषितः ॥ १२ ॥
अथ दर्शनानि षडपि न्यवेशय-
त्तनयेषु स त्रिपु न चान्तिमे द्विजः ।

---

१. षड् दर्शनानि तदुक्तं शास्त्रनिर्णये—
'कपिलस्य कणादस्य गौतमस्य पतञ्जले. ।
व्यासस्य जैमिनेश्चैव दर्शनानि षडेव तु ॥'

अभजन्त तानि तमगेषु वर्षति
स्तनयित्नुरब्धिमुदकानि यान्ति हि ॥ १३ ॥

तनयानपाठयदयं पतञ्जले-
र्महती कृति मतिमतां गणैः सह ।
पठने तु भर्तृहरिरुत्सुकोऽपि तै-
र्विनिवारितश्चरमवर्णभूरिति ॥ १४ ॥

विजने जगाद पितरं कृताञ्जलि-
र्विनयेन भर्तृहरिराचरन्नमः ।
[1]महनीयपाणिनिमतानुकूलया
लवलीसुगन्धपदबन्धया गिरा ॥ १५ ॥

भगवन्पतञ्जलिरभून्महीतले
भवदाकृतिः प्रथयितुं निजां कृतिम् ।
इति वर्णयन्ति मुनयः पुराविदो
मम तेन भाष्यपठने मनोरथः ॥ १६ ॥

कुहर विधाय किमपि क्षमातले
कुरु मामिहस्थमुपरिस्थितो भुवि ।
पठतश्च पाठय कृतिं पतञ्जले-
र्यदहं पठेयमनवेक्षितोऽखिलैः ॥ १७ ॥

कतमोऽपि मामपि भवन्तमन्तरा
कमनीय एव किल रश्मिरायतः ।
चलयेयमेनमथ चोद्यमस्ति चे-
न्मम तत्र भाष्यमसकृत्प्रबोधय ॥ १८ ॥

विहितं यदीत्थमतिसहिता बुधा
निखिला भवन्ति भवति श्रुतं च मे ।
फणिभाष्यमान्तमपि चिन्त्य सिद्धये
किमपि प्रसीद मयि तत्कृपानिधे ॥ १९ ॥

---

१. पञ्चदशश्लोकस्योत्तरार्धस्तदनन्तरीयस्य पूर्वार्धश्च ख-पुस्तके न स्तः.

इति पुत्रवाक्यमवकर्ण्य सोऽब्रवी-
दिदमेवमस्तु भवतो यथेप्सितम्।
शृणु वत्स किंचिदवधाय मे वचो
गुरुसप्रदायपदवीसमागतम्॥ २०॥
यदि गौतमस्य मतमप्रतिष्ठितं
यदि जैमिनेः श्लथयितुं क्षमं नयैः।
यदि भिक्षुशास्त्रमिदमाविलं खलै-
र्न तथा पतञ्जलिमतं तु दुष्यति॥ २१॥
इतरस्य शास्त्रनिचयस्य कारका
मनुजेषु केचन परं तु तापसाः।
भगवाञ्जगद्धरणसहृतिक्षमः
फणिराज एव पदशास्त्रभाष्यकृत्॥ २२॥
अशुचि शठं विषयलुब्धमास्तिक-
द्विषमप्रवृत्तगुरुशास्त्रभक्तिकम्।
यदि शिष्यमानयति भाष्यमुद्धृण-
न्विपदं तयोर्वदति दृग्गतः फणी॥ २३॥
प्रयतः प्रसन्नहृदयो जितेन्द्रियः
प्रवणो महत्सु गुरुशास्त्रभक्तिमान्।
फणिनः[1] कृतिं पठति चेन्न हीयते
न भजत्यघं न गुरुणा विरुध्यते॥ २४॥
प्रथमं विचिन्तय गतिं तथा गतां
पदसूत्रवार्तिककृतोर्द्वयोरपि।
फणि[2]शिष्यचेष्टितमपि श्रुतं ततो
बहुविघ्नमेव पदशास्त्रशीलनम्॥ २५॥
कुशलाय वृद्धिरिति सिद्ध इत्यथे-
त्युदितं पदत्रयमुपक्रमे कृतेः।

१. 'सुकृती कृतिं' ख. २. 'फणिशिष्यचेष्टितमपि द्रुतं' क.

यद्दपित्रयेण पठतां[1] निरागसां
　मत एव मङ्गलमुदेत्यनिर्गलम्[2] ॥ २६ ॥
प्रथमोत्तरस्य[3] फलमाह्निकस्य य-
　त्पठने पतञ्जलिरनल्पमब्रवीत् ।
उपलक्षणं तदखिलाह्निकावले-
　र्महतः फलस्य विवृतं मनीषिभिः ॥ २७ ॥
यदि रक्षसा यदि गणैर्यदि ग्रहै-
　र्यदि चामयेन परिगृह्यते द्विजः ।
स पतञ्जलेरहरहः पठन्कृतिं
　द्रुतमश्नुते सुखमिति प्रचक्षते ॥ २८ ॥
न च तुर्यवर्णवनितासुतस्य ते
　कथमागमाङ्गपदभाष्यसंस्तवः ।
इति शङ्क्यमस्ति यदसि त्वमात्मवि-
　न्न भवादृशे विधिनिषेधयोग्यता ॥ २९ ॥
इति जल्पितं जनयितुर्निशम्य स
　प्रतिपद्यते स्म परमं तु विस्मयम् ।
क्षितिगर्भमन्दिरगतः पतञ्जले-
　रपठीत्कृतिं च बुधकुञ्जराद्गुरोः ॥ ३० ॥
पठिते पतञ्जलिनिबन्धने द्विजः
　कृतदारकर्मणि च पुत्रमण्डले ।
शुकशिष्यगौडपदगुर्वनुग्रहा-
　च्चरमाश्रमं सुरनदीं च शिश्रिये ॥ ३१ ॥
चतुराननेन विधिनेव मुञ्चता
　समधिष्ठितं जगदशेषमात्मनि ।
भजतामुना परमहंससेव्यता-
　मथ विश्वनाथपुरमाददे श्रियम् ॥ ३२ ॥

---

१. 'पठितान्निरागसा' क. २. 'उदेत्यनर्गलम्' क. ३. 'प्रथमोत्तमस्य' क.

यदुदञ्चितध्वजपटे समीरणैः
कृतनर्मघर्मकणिकानिवारणे ।
निपतन्ति नीलनलिनत्विषो नभ-
श्चरसिद्धचारणपुरंध्रिदृष्टयः ॥ ३३ ॥

दिवसात्ययेषु सुरमुग्धसुभ्रुवो
दिवि विस्मितप्रियहठाहृतांशुकान् ।
कुचकुड्मलान्पिदधते ससंभ्रमं
यदुदग्रकेतनदुकूलपल्लवैः ॥ ३४ ॥

सततं यदीयसदनाग्रवासिन-
स्तरुणव्रजस्य तरलं दृगञ्चलम् ।
रमयन्ति सनिहितनन्दनद्रुम-
स्तबकग्रहोद्यतभुजामरीस्तनाः ॥ ३५ ॥

यदुदग्रसौधभुवि बिम्बविभ्रमे-
ष्वधरेषु नन्दनशुकैर्निपातिभिः ।
जनिते भये दधति मुग्धसुभ्रुवां
परिरम्भसभ्रमसुखं विलासिनः ॥ ३६ ॥

सुरकुञ्जरे स्पृशति शुण्डयाम्बुज-
स्तबकोऽयमित्यमरसिन्धुबिम्बितौ ।
स्वपयोधरौ यदतितुङ्गसौधगा
सुदती पतिं सभयमेत्य सस्वजे ॥ ३७ ॥

रजनीषु यन्मणिशिरोगृहस्थिताः
प्रियपाणिपङ्कजनिपीडितोरवः ।
सुदृशोऽनिलं च्युतवतंसपल्लवाः
स्तुवते विधूनसुरदीर्घिकोत्पलम् ॥ ३८ ॥

निशि यद्विहारमणिकुट्टिमाङ्गणे
गलितो वधूचिकुरमल्लिकाचयः ।
प्रतिबिम्बितादुडुगणाद्विभिद्यते
निजसौरभेण निबिडीकृतालिना ॥ ३९ ॥

घनयावकाङ्कनिजपादमुद्रितं
　　नवहंसतूलशयनं सखीजने ।
निपुणं विलोकयति यत्र मुग्धया
　　सपदि न्यमज्जि महति त्रपाम्बुधौ ॥ ४० ॥
तरुणी गृहाग्रमधिरुह्य दृष्टव-
　　त्यमरीः सहस्रमनिमेषलोचनाः ।
रमणस्य यत्र मणिसालभञ्जिका-
　　निकटेऽपि नानुमनुतेऽधरग्रहम् ॥ ४१ ॥
मकरीविलेखनविधौ नवोढया
　　विवृतौ निरीक्षितुमुरोजकुड्मलौ ।
अपि सवृतस्फटिकभित्तिमन्तरा
　　बत यत्र निन्दति युवाविवृण्वतीम्[1] ॥ ४२ ॥
परिरम्भचुम्बनविधायिदम्पति-
　　प्रतिमामवेक्ष्य यदगारभित्तिषु ।
रहसि प्रियेण शयने सहस्थितिः
　　कियदन्वमन्यत पर नवोढया ॥ ४३ ॥
शिखिपिच्छकस्य समवेक्ष्य चन्द्रकं
　　वलभीविटङ्कपटलावलम्बिनः ।
यदुदारसद्मनि नवोढया सखी-
　　नयनभ्रमादपसृत प्रियान्तिकात् ॥ ४४ ॥
रमणस्य यत्र वसतोऽपि दूरतः
　　प्रतिबिम्बमेव मणिभित्तिदर्शितम् ।
परिरब्धुमुद्यतभुजा नवा वधू-
　　र्विजनेऽपि हन्त विरराम केवलम् ॥ ४५ ॥
कुपितां निशम्य रमणीं नवागसा
　　दयितेन तीव्रमनुनेतुमीयुषा ।

---

१. 'युवा विवृण्विति' क.

यदगारसीम्नि मणिसालभञ्जिका
प्रणता भिया परिहसत्सखीजनम् ॥ ४६ ॥
निशि यत्र वेश्मनि विधूपलस्फुर-
द्वलभीवलीकगलदम्बुशीतले ।
तरुणो निदाघसमयेष्वपि प्रिया-
कुचकुम्भगाढपरिरम्भमातनोत् ॥ ४७ ॥
घनसारपङ्ककलिते तपागमे
यदगारकुट्टिमतले युवा गतः ।
निपतिष्यतीमिव सखीजनान्तिका-
च्चलिता सलीलमबला करेऽग्रहीत् ॥ ४८ ॥
जलदागमे जलजलोचनाः पुन-
र्दृढबद्धजालककवाटमालयम् ।
अधिशय्य यत्र रमणादधीयते
चिरकालविस्मृतमिव स्मरागमम् ॥ ४९ ॥
न हि कश्चिदस्ति किल भिक्षुको जनो
यदधिष्ठितेषु घनधान्यशालिषु ।
परिधातुमप्यसुलभैकवाससं
भवमन्तरेण धृतभैक्षभाजनम् ॥ ५० ॥
वसनानि वा मणिविभूषणानि वा
सुलभानि यत्र धनिषु प्रदातृषु ।
नटतस्त्विहादिजटिलस्य किं ब्रुवे
वसनं दिगाभरणमस्थिमण्डलम् ॥ ५१ ॥
[1]मणिकर्णिका गतवता शरीरिणा
श्रुतिभूषणं किमपि यत्र लभ्यते ।
इति विस्मयः क इह तत्किलाद्भुतं
यदसावुपागमदहीनकङ्कणम् ॥ ५२ ॥

---

१. अयं श्लोकः ख-पुस्तके नास्ति.

मणिकर्णिकाम्भसि तनूस्त्यजन्ति ये
मनुजास्ततोऽपहृतकोशपञ्चकाः ।
अपि यत्र मुञ्चति मृडो[1] न हि क्षणं
स तथाविधः कितवशेखरो न किम् ॥ ९३ ॥

श्रवणे किमप्युपदिशन्विभूतिम-
प्यलिकेऽर्पयन्नुरसि[2] चास्थिमालिकाम् ।
हरते स यत्र मणिकर्णिकातटे
जटिलो यदस्ति जगतीह देहिनाम् ॥ ९४ ॥

निखिलस्मृतीरयमतीत्य वर्तता
गिरिशो न दण्डधरतो बिभेतु वा ।
करुणाकरोऽप्यपहरन्कथं नृणा
तनुमेव यत्र न पुनः प्रयच्छति ॥ ९५ ॥

स्वतनूरपास्य मणिकर्णिकातटे
सहसा विमुक्तिमनुधावता नृणाम् ।
मनसो गुणास्त्रय इव च्युता बभु-
र्मणिविद्रुमेन्द्रमणयो यदापणे ॥ ९६ ॥

परिशुद्धिदापि बत यत्र जाह्नवी
मलिनीकरोति[3] किल मज्जता गलान् ।
कथये किमन्यदतिशीतलापि सा
घटयत्यहो करतले हुताशनम् ॥ ९७ ॥

सरिदन्तरे जलमशीलितं[4] नृणा-
मवगाढमाशु तुदते परं शिरः ।
बत यत्र दिव्यसरितस्तु तत्पुनः
कुरुतेऽधिरुह्य सततं च पञ्चधा ॥ ९८ ॥

---

१. 'मृडोनभीक्षण' इति ख-पुस्तके वर्तते अताश्चिन्तनीयः को वा पाठः शुद्ध इति.
२. 'अर्पयन्शिरसि' क. ३ 'मलिनीकरोति बत' क. ४. 'जलमशीतलम्' इति क-पुस्तकस्थपाठो न साधुर्दृश्यते.

स्तुतिपात्रमस्तु सुरदीर्घिका कथं
  यदियं यदन्तरचरी[1] निमज्जताम् ।
समये करे च निटिले च पावकं
  विनिधाय पाययति हा महाविषम् ॥ ५९ ॥
यदि धर्तुमिच्छति करोटिकास्रजं
  यदि कर्णवेष्टनमहि चिकीर्षति ।
यदि वा पिपासति विषं जनस्तदा
  विदधातु यत्र विबुधापगाप्लवम् ॥ ६० ॥
शुचिरद्रिजारमणनेत्रनिर्गतः
  प्रथमो ददाह किल काममूष्मलम्[2] ।
इति शीतलः सुरनदीझरो नृणा-
  मपरोऽपि यत्र षडरीनपोहति ॥ ६१ ॥
मनुजाय यत्र मणिकर्णिकातटे
  स तु तस्य जल्पति मनुं तनुत्यजे ।
अपि यः पिशाचनिचयस्य नायकः
  कपयः प्रपत्तिमथ यस्य कुर्वते ॥ ६२ ॥
निजचापभिन्निजनिषङ्गभङ्गकृ-
  न्निजभक्तपङ्क्तिगलदारणो रणे ।
इति यत्र भूतपतिरीर्ष्ययेव त-
  त्पदमर्पयत्यहह पामरेष्वपि ॥ ६३ ॥
स[3] तु विश्वनाथपुरमावसन्यतिः
  समुपेयुषा सदसती हि वस्तुनी ।
वचनेन चञ्चुकलनेन विष्टपे
  विविवेच हंस इव दुग्धपाथसी ॥ ६४ ॥
उपसंहृतेन विषयानुधावना-
  त्परमे स्व एव परिनिष्ठितेन च ।

---

१. 'यदन्तराचिर' ख. २.'कामकुड्मलम्' ख. ३.'स तु विश्वनाथपुरमावसद्यतिः' क

समवृत्तिना सहृदयेन पप्रथे
सुखदुःखयोः सखिसपत्नयोरपि ॥ ६५ ॥
स्वपनप्रपञ्चसदृशं जगत्त्रयं
विदुषा मृषा मरुमरीचिवारिव ।
अमुना स्वरूपमवशेषितं धिया
परमात्मबोधसुखमात्रलक्षणम् ॥ ६६ ॥
सुरसिन्धुरोधसि गिरीशसंनिधा-
वतिनीय तत्र कियतोऽप्यनेहसः ।
विरहासहैरनुगतः स योगिभिः
परिपावनं बदरिकाश्रमं ययौ ॥ ६७ ॥
ब्रह्माद्वैतं पश्यताशेषविश्वं
गोविन्दस्वामीति गीतेन लोके ।
पुण्यक्षेत्रे तत्र नारायणीये
कश्चित्कालानाश्रमे तेन तस्थे ॥ ६८ ॥

इति श्रीयज्ञरामदीक्षितपुत्रस्य श्रीरामभद्रयज्वन कृतौ पतञ्जलिचरिते सप्तम सर्गः ।

---

अष्टम सर्ग ।

प्रव्रज्य तातचरणे परया विरक्त्या
काशीं गिरीश इव पावयति द्वितीये ।
ज्ञानेन शास्त्रजनितेन गृहीतधैर्या-
स्तस्यात्मजा वररुचिप्रमुखा न मम्लुः ॥ १ ॥
नात्यन्तमेव परिचिक्लिशुरिन्द्रियाणि
नाप्यन्ववर्तिषत तानि यथाभिलाषम् ।
स्वस्वानुरूपमवलम्बितशास्त्रमार्गाः
सर्वेऽपि सजगृहिरे सदृश त्रिवर्गम् ॥ २ ॥
सर्वासु शास्त्रपदवीषु विचक्षणोऽपि
ग्रन्थान्व्यधाद्गणित एव जनोपकारान् ।

तेष्वग्रजो वररुचिर्दिवसेश्वरो हि
प्राच्यामुदेत्यखिलदिक्ष्वपि निर्निरोधः ॥ ३ ॥
तस्यानुजो भवति यः किल विक्रमार्कः
संक्रन्दनेन सुरलोकसभान्तराले ।
स स्वर्नटीनटनविभ्रमतारतम्य-
जिज्ञासया पटुरहूयत नाट्यदृष्टौ ॥ ४ ॥
निश्चित्य शासितवते दिवि तारतम्यं
नाट्येषु गोत्रभिददादभिनन्द्य तस्मै ।
राज्यं कुरु त्वमुपविश्य समाः सहस्र-
मस्मिन्क्षिताविति ततो मणिपीठमेकम् ॥ ५ ॥
रत्नासनेन सुरकिंकरधारितेन
साकं समागतवतो गिरमग्रजस्य ।
भट्टिर्निशम्य सचिवोऽस्य भवन्नुपाया-
द्द्वे चायुषामुपनिनाय तदा सहस्रे ॥ ६ ॥
मासान्षडेकशरदो मणिपीठमध्य-
मध्यास्य राज्यमकरोदनुजोपदेशात् ।
अन्यानरण्यचर एव तु षट् च मासा-
नित्यायुषामलभतायमुभे सहस्रे ॥ ७ ॥
भट्टिस्तदा सकलशास्त्रविशारदत्वा-
द्बुद्ध्यानया नयविवेकधुरा वहन्त्या ।
कार्येषु तस्य नृपतेः स्वयमप्रमाद्य-
न्वोढाभरन्नट इवाजनि रज्जुमार्गे ॥ ८ ॥
बुद्ध्याग्रिमोऽपि जनुषा चरमः कनीया-
न्रामस्य राक्षसरिपोश्चरितप्रबन्धम् ।
नामाग्रजस्य परिगृह्य स भट्टिकाव्य-
मित्याततान सुपदैः पदशास्त्रलक्ष्यैः ॥ ९ ॥

संदर्भणेन च स भर्तृहरिः पदानां
　　कंदर्पकार्मुकरसार्पणकर्मठेन ।
शृङ्गारनीतिविगतस्पृहतानुबन्ध-
　　मन्यच्च पद्यशतकत्रयमाततान ॥ १० ॥

ग्रन्थोऽधिकृत्य किल वाक्यपदे बुधाना
　　चक्रेऽथ तेन निखिलार्थविबोधहेतुः ।
यस्यातनोद्विवरणप्रणयेन हेला-
　　राजः शशीव किरणेन विवृद्धिमब्धेः ॥ ११ ॥

वत्सक्षतं सपितृकुण्डलितं यथाव-
　　द्बुद्ध्याकलय्य लिपिजालकमन्तरन्तः ।
टीका पतञ्जलिकृतस्य सपादलक्ष-
　　ग्रन्थात्मनातनुत भाष्यनिबन्धनस्य ॥ १२ ॥

अत्यन्तदुर्गहमशेषमनीषिवर्गै-
　　र्भावं पतञ्जलिकृतेर्मनसा स पश्यन् ।
तस्य स्फुटं विवरणे पटुतां निजां च
　　दुर्वारगर्वगरिमोष्मलमाह चेदम् ॥ १३ ॥

अहो भाष्यमहो भाष्यमहो वयमहो वयम् ।
मामदृष्ट्वा गत' स्वर्गमकृतार्थः पतञ्जलिः ॥ १४ ॥

इत्युक्तिसजनितगुर्वपराधयोगा-
　　ट्टीका न तस्य लभते स्म भुवि प्रतिष्ठाम् ।
विद्या न दूषयति किं विनयव्यपायो
　　नासावियोग इव योषितमुज्ज्वलाङ्गीम् ॥ १५ ॥

इत्थं सुमन्त्रसचिवैस्तमसोऽपगत्या
　　शुद्धैश्चतुर्भिरुरुकीर्तिभिरुज्जयिन्याम् ।
कालस्तदा कलिरपि प्रथते स्म पुण्य-
　　स्त्रेतेव दाशरथिभिर्मनुराजधान्याम् ॥ १६ ॥

अत्रान्तरे सरिति नक्रगृहीतपादः
सन्यस्तशंकरमुनिर्दुरिताद्विमुक्तः ।
गोविन्ददेशिकपदाम्बुजदर्शनाय
बद्धादरो बदरिकाश्रममन्वियाय ॥ १७ ॥

शैलान्वनानि सरितो नगराणि पल्ली-
ग्रामाञ्जनानपि पशून्पथि सोऽथ पश्यन् ।
नन्वैन्द्रजालिक इवाद्भुतमिन्द्रजालं
ब्रह्मैवमेव परिदर्शयतीति मेने ॥ १८ ॥

दण्डान्वितेन धृतरागघनाम्बरेण
काशीपुरं कलितविश्रमनीलकण्ठम् ।
तेन प्रविष्टमजनिष्ट दिनावसाने
चण्डत्विषा च शिखरं चरमाचलस्य ॥ १९ ॥

वन्यद्विपस्य चरमाचलवासभाजो
हस्तेन केलिचटुलेन गृहीतकीर्णैः ।
तत्रत्यगैरिकरजोभिरिवानुलिप्त-
मारुण्यमाप भृशमम्बुजबन्धुबिम्बम् ॥ २० ॥

व्यातन्वता विहरणं वरुणावरोध-
कान्ताजनेन चरमाचलकन्दराग्रे ।
विक्षिप्तरत्नमयकन्तुकविभ्रमस्य
पात्रं बभूव परिपाटलमर्कबिम्बम् ॥ २१ ॥

प्रत्यग्गिरेरुपरि कुङ्कुमपाटलाभ-
श्चण्डद्युतिः क्षणमलक्ष्यत जीवलोकैः ।
न्यस्तः पुरा हनुमता निजबाललग्नः
प्रासादशृङ्ग इव पङ्क्तिमुखस्य वह्निः ॥ २२ ॥

आकृष्य सर्वमहिमद्युतिरंशुजालं
विद्वानिवेन्द्रियगणं विषयप्रपञ्चात् ।

आरुह्य चान्तिममिवाश्रममद्रिशृङ्ग-
मानन्दमद्वयमिवापरमब्धिमाप ॥ २३ ॥
ह्रित्वानुतापभरिते द्विजराजलक्ष्मीं
पाश्चात्यमब्धिमघनिष्कृतयेऽनुमङ्क्तुम् ।
चण्डद्युतौ व्रजति संभ्रमतोऽस्य शीर्णा
रेजुस्त्विषस्त्रिचतुरा इव साध्यरागाः ॥ २४ ॥
भूमण्डलस्य कवलीकरणाय पूर्वं
तालीवनं प्रविशता तमसा भरेण ।
संदर्शिता ननु चमूविनिवेशभङ्ग्या
कालीकटाक्षकलुषः किल कालिमैकः ॥ २५ ॥
चक्रद्वयीमधिगताम्बुजनालडोला-
मन्योन्यसंघटितपक्षपुटामकाण्डे ।
दूरे वियोजितवतो दिवसात्ययस्य
दुष्कीर्तिवृन्दमिव संददृशे तमिस्रम् ॥ २६ ॥
तत्कालसंकुचदशेषदलाग्ररोधा-
द्भर्भरणन्मधुकरं कमलं वहन्ती ।
अम्भोजिनी दिनकरप्रियविप्रयोगा-
दन्तःप्रवृत्तरुदितेव तदा व्यलोकि ॥ २७ ॥

---

१. 'भानोः पश्चिमशैलकन्दरकुटीमभ्येयुषः सभ्रमा-
त्सध्यारागमिषेण किं विगलिता भान्ति त्विषः पञ्चषाः ।
किं चैषा कृतनिश्चयेन कवलीकर्तुं महीमण्डली-
माक्रान्ता प्रथमं घनेन तमसा नीला तमालाटवी ॥'
इति शृङ्गारतिलकभाणे.

२. 'चक्रद्वन्द्वं चटुलनलिनीनालडोलाधिरूढं
गाढाश्लिष्टं त्यजति रजनीजातविश्लेषदुःखम् ।
नक्तं भुक्त्वा नवकुमुदिनीं विश्रमार्थी विभाते
गङ्गागेहं विकचकमलं गाहते चञ्चरीकः ॥'.
इति शृङ्गारतिलकभाणे.

यद्वारुणीपतिरसेवत पङ्कजिन्याः
पादं तदर्पयितुमप्यविदन्पृथिव्याः ।
दूरे खलु न्यपतदम्बरमप्यपास्य
हीहीति नीलनलिनी व्यहसीदिवाग्रे ॥ २८ ॥

आसायमम्बुजवनीमलिराप्रभात-
माश्रित्य तत्समयमत्यजदेव दूरे ।
कं[1] स्थातुमिच्छति मुखे मुकुलीकृतेऽपि
स्थानं न चेत्कुवलये क्वचिदप्यलभ्यम् ॥ २९ ॥

दिष्ट्या वृता वसुमती तमसा घनेन
निम्नोन्नतानि भुवि तेन समीकृतानि ।
इत्यादरादभिसृतिः कुलटाजनस्य
जाता तदा सदधिपेन विना यथेष्टम् ॥ ३० ॥

प्राप्तो ह्यहं त्रिजगति द्विजराजभावं
बिम्बाधरे मुहुरभीकभुजङ्गदष्टे ।
हर्तुं क्षमेत सुदृशां रसपारवश्य-
मित्यन्तरिन्दुरुदियाय मिलत्कलङ्कः ॥ ३१ ॥

चन्द्रोदयेन सहसा बिभिदे तमिस्रा
त्र्यन्तबोधविधिनेव चिरादविद्या ।
द्रागन्वभूयत तदा किल जीवलोकैः
कोऽप्यद्भुतः सुखमयः परिणामभेदः ॥ ३२ ॥

तां तारकाहितरुचिं तमसो निहन्त्री
तापस्य चोज्ज्वलमृगाङ्ककरां त्रियामाम् ।
काश्यामसेवत तदा किल शंकराख्यो
लिङ्गे शिवस्य महिते मनसा च मूर्तिम् ॥ ३३ ॥

आत्मानमेकमखिलेष्वयमद्वितीयं
पश्यन्नपि व्यवहरन्निव लोकरीत्या ।

---

1. 'कः स्थातुमिच्छति' ख.

तुष्टाव नूतनसुधातुलितैर्वचोभि-
　रेवं प्रपन्नकरुणाकरमिन्दुमौलिम् ॥ ३४ ॥

कस्त्वामवाङ्मनसगोचरमस्तु शक्तः
　स्तोतुं सहस्व तदिह स्तुतिसाहसं मे ।
देव स्तवाय तव यन्निगमाः प्रवृत्ताः
　श्वानो बभूवुरपराधिन इत्यवैमि ॥ ३५ ॥

चित्तेऽन्धकारिणि मम क्रमितुं क्षमेत
　पादाब्जमेकमपि तावकमिन्दुमौले ।
अस्त्यक्षि यस्य हरिणार्पितमर्चनार्थं
　मञ्जीरपन्नगफणामणिदीपिका च ॥ ३६ ॥

यद्गीयसे श्रुतिगिरा त्वमपाणिपाद-
　स्तद्विश्वसन्ति भुवनानि[1] विनामरौ द्वौ ।
भानुं करप्रहृतिकल्पितदन्तभङ्गं
　पादाहतित्रुटितवक्षसमन्तकं च ॥ ३७ ॥

जानीमहे जगदधीश्वर यः पुरा ते
　नालक्षयज्जवनमप्यधिरुह्य हंसम् ।
अत्रेर्विधिः स तनयस्त्वयि भक्तिभाजो
　भूत्वाधिगच्छति शिरः शिशिरः शशाङ्कः ॥ ३८ ॥

अन्विष्यतो मुहुरपि श्रमशुष्कतालो-
　र्धातुश्चिराय जनितात्खलु विप्रलम्भात् ।
यत्पापमुत्थितमपास्तमिदं ममेति
　पार्थाहतः किमु विवेद तवेश मूर्धा ॥ ३९ ॥

न स्तस्तवेश पितरौ श्वशुरः शिलात्मा
　व्यालः स्वमार्गणतनुः सुतयोरथैकम् ।
लोकाः कुमारमितरं विदुरेकदन्तं
　त्वं भिक्षुकासि वसितुं वसनं कुतस्ते ॥ ४० ॥

---

१. 'भुवनानि विभो विना द्वौ' ख. अय पाठः समीचीनतरश्चेति दृश्यते

मौनं[1] विधाय गुरुरस्म्यहमित्यकाण्डे
 किं विप्रलम्भयसि मूलगतो वटस्य।
प्राचो मुनीनपि वृषध्वज यत्प्ररूढो
 नाद्यापि ते विगलितः पशुपालभावः॥ ४१॥
दग्धस्त्वया प्रथमतः प्रमथेश कामो
 दग्ध पुरत्रयमथ स्मितलीलयैव।
धत्से करेऽग्निमधुनापि जगन्ति दग्धुं
 बिभ्यत्यतस्त्वदिह पञ्च यमादयोऽपि॥ ४२॥
त्वत्तोऽधिको[2] हरिरिति ब्रुवतो यदास्तां
 स्तब्धौ भुजौ नियमिनोऽभ्यधिकं ततस्त्वाम्।
निश्चिन्वतो घटभुवस्तु स विन्ध्यशैल-
 संभेदनेऽप्यभवदस्खलितः प्रभावः॥ ४३॥
सर्वेश्वरोऽसि भव नास्ति तवान्तकोऽपि
 हृष्टाः प्रजा दधति चाप्यधुना विवृद्धिम्।
ख्यातो भिषक्तम इति त्वमतो विनृत्य-
 स्यानन्दतो यदि विनृत्य किमासितव्यम्॥ ४४॥
इत्थं कृतस्तुतिरवाप्य ततः प्रसन्ना-
 त्र्यम्बकसूत्रमृदुभाष्यनिबन्धशक्तिम्।
काशीपुरान्निरगमत्सविकासभाजः
 प्रातः सरोजमुकुलादिव चञ्चरीकः॥ ४५॥
अद्वैतदर्शनविदा भुवि सार्वभौमो
 यात्येष इत्युडुपबिम्बसितातपत्रम्।
अस्ताचले वहति चारु पुरःप्रकाश-
 व्याजेन चामरमधादिव दिङ्मघोनः॥ ४६॥

---

१. 'चित्रं वटतरोर्मूले वृद्धाः शिष्या गुरुर्युवा।
 गुरोस्तु मौनं व्याख्यानं शिष्यास्तु च्छिन्नसंशयाः॥'.
२. 'गोविन्दादधिकं न दैवतमिति प्रोच्चार्य हस्तावुभौ' इति.

[1]तारास्तदा ददृशिरे तरला नलिन्या
हृत्वा श्रियं शशिनि धावति साध्वसेन ।
तत्संभ्रमत्रुटितहारलता विशीर्णा
मुक्ता इव त्रिचतुरा गगनान्तराले ॥ ४७ ॥
[2]अम्भोजकाननमहोत्सवलक्षणानि
शीतांशुकान्तिशिथिलीकृतिसूचकानि ।
तावन्निशम्य चरणायुधकूजितानि
शय्यामहो परिजहार न जारयुग्मम् ॥ ४८ ॥
सर्वां निशामपि विनीय विमुक्तनिद्रा
सकेतितादपसृतापि तदा निकुञ्जात् ।
वामेन हन्त नयनेन चलेन किंचि-
ज्जाराङ्गना सरभस विनिवर्तते स्म ॥ ४९ ॥
राज्ञोऽवरोधभवनेषु कवाटिकाना-
मुद्घाटनादजनि यद्ध्वनितं तदानीम् ।
कामागमस्य गणनावसरे वधूना
ज्यायाननध्ययनहेतुरयं बभूव ॥ ५० ॥
सर्वात्मना व्यपसृतं न यदा तमिस्रं
मन्दं तदा स्पृशति गन्धवहेऽङ्गमङ्गम् ।
नाथागमात्प्रथमतो नलिनी दधाना
वक्रे विकासमपि कम्पितमूर्तिरासीत् ॥ ५१ ॥
पुष्पंधयी विकसितात्कियदुत्पतन्ती
नालीककुड्मलमुखान्नलिनाकरस्य ।

---

१. 'तारास्तदा ददृशिरे विरला' ख. विद्यमान. पाठ साधीयान्भाति

२. 'अम्भोजकाननमहोत्सवलक्षणानि
शीतांशुकान्तिशिथिलीकृतिसूचकानि ।
आविर्भवन्ति मिथुनश्रुतिदुःसहानि
कुक्कुरुतानि चरणायुधकण्ठनालात् ॥'
इति शृङ्गारतिलकभाणे.

व्योमद्रुमाग्रगतिषूड्डुविहंगमेषु
मुक्ता निपातघुटिकेव तदा बभासे ॥ ९२ ॥
अस्या भविष्यति किमूपशमो निशायाः
सद्रक्ष्यते सहचरी च मया पुनः किम्।
इत्याकुलं दयितया सह दीर्घिकाया
कोकं सखीव समयोजयदूर्मिरेका ॥ ९३ ॥
दूरापसारिततमोरुचिरालकेन
प्राचीमुखं परिमृशत्यरुणे करेण।
द्रष्टुं ह्रिया किमसितोत्पलिनीभिरग्रे
तावत्प्रसूननयनानि निमीलितानि ॥ ९४ ॥
पूर्वाचलोपवनसीम्नि पुरंदरस्य
स्त्रीभिर्विहृत्य निशि निःसरतः प्रभाते।
तावद्दधार परिवारवधूगृहीत-
माणिक्यखेटकतुलां मिहिरस्य बिम्बम् ॥ ९५ ॥
उत्पिञ्जराम्बररजःकपिशालिचक्र-
व्याजेन मे वितनुते दिगियं मघोनः।
नीराजनामिति तदानु नवातपेन
रत्नांशुकेन समभावि विवस्वता सा ॥ ९६ ॥
दृष्ट्वा पतिं परवधूकुचकुङ्कुमाङ्क-
दोर्मध्यमप्युषसि भाति नवातपोऽयम्।
अस्योरसीति हृदि विश्वसती नताङ्गी
मेने तदा न दयितेन न चानुनिन्ये ॥ ९७ ॥
पद्माकरोऽयमरविन्दविकासलक्ष्मी
सानन्दमुद्वहति सांप्रतमित्यलीनाम्।
नादच्छलादिव जगुर्मधुरं तदानीं
दिग्योषितो धृतनवातपकुङ्कुमाङ्गचः ॥ ९८ ॥

बिम्बे भजत्युदयमम्बुजबान्धवस्य
　दध्यौ तदा पुरुषमेकमृषिः स दिव्यम् ।
आह श्रुतिर्भगवती किल यं हिरण्य-
　श्मश्रुं हिरण्यकचमा प्रणखात्सुवर्णम् ॥ ५९ ॥

तेनान्ववर्ति महता क्वचिदुष्णशालि[1]
　शीतं क्वचित्क्वचिदृजु क्वचिदप्यरालम् ।
उत्कण्टकं क्वचिदकण्टकवत्क्वचिच्च
　तद्वर्त्म मूर्खजनचित्तमिवान्यवस्थम् ॥ ६० ॥

आत्मानमक्रियमपव्यथमीक्षितापि
　पान्थैः समं स चलितः पथि लोकरीत्या ।
आदत्फलानि मधुराण्यपिबत्पयांसि
　प्रायादुपाविशदशेत तथोदतिष्ठत् ॥ ६१ ॥

तेन व्यनीयत तदा पदवी दवीय-
　स्यासादित बदरिकाश्रमभूतलं च ।
शंसन्ति यत्र वसतिं तरवो मुनीनां
　शाखाभिरुज्ज्वलमृगाजिनवल्कलाभिः ॥ ६२ ॥

आदेशमेकमनुयोक्तुमयं व्यवस्य-
　न्प्रादेशमात्रविवरप्रतिहारभाजम् ।
तत्र स्थितेन कथिता यमिना गणेन
　गोविन्ददेशिकगुहां कुतुकी ददर्श ॥ ६३ ॥

तस्याः प्रपन्नपरितोषदुहो गुहायाः
　स त्रिः प्रदक्षिणपरिक्रमणं विधाय ।
द्वारं प्रति प्रणिपतञ्जपता पुरोगं
　तुष्टाव तुष्टहृदयस्तमपास्तशोकम्[2] ॥ ६४ ॥

पर्यङ्कता भजति यः पतगेन्द्रकेतोः
　पादाङ्गदत्वमथवा परमेश्वरस्य ।

---

१. 'क्वचिदुष्णशाली' क. तत्पामादिकमिति भाति. २. 'अपास्तचेत्यम्' 'क'

तस्यैव मौलिधृतिसार्णवशैलभूमेः
शेषस्य विग्रहविशेषमहं भजे त्वाम् ॥ ६५ ॥
दृष्ट्वा[1] पुनर्निजसहस्रमुखीमभेपु-
रन्तेवसन्त इति तामपहाय भूयः ।
एकाननेन भुवि यस्त्ववतीर्य शिष्या-
नन्वग्रहीन्ननु स एव पतञ्जलिस्त्वम् ॥ ६६ ॥
तस्मिन्निति स्तुवति कस्त्वमिति ब्रुवन्तं
दिष्ट्या स[2]माधिपथरुद्धविसृष्टचित्तम् ।
गोविन्ददेशिकमुवाच तदा स[3] वाग्मिः
प्राचीनपुण्यजनितात्मविबोधचिह्नैः ॥ ६७ ॥
स्वामिन्नहं न पृथिवी न जलं न तेजो
न स्पर्शनो न गगनं न च तद्गुणा वा ।
नापीन्द्रियाण्यपि तु विद्धि ततो विशिष्टो
यः केवलोऽस्ति परमः स शिवोऽहमस्मि ॥ ६८ ॥
आकर्ण्य शंकरमुनेर्वचन तदित्थ-
मद्वैतदर्शनसमुत्थमुपात्तहर्षः ।
स प्राह शंकर स शंकर एव साक्षा-
ज्जातस्त्वमित्यहमवैमि समाधिनेति ॥ ६९ ॥
तस्याथ दर्शितवतश्चरणौ गुहायां
द्वा[4]रे ह्यपूजयदुपेत्य स शंकरार्यः ।
आचार इत्युपदिदेश स तत्त्वमस्मै
गोविन्दतापसगुरुर्गुरवे यतीनाम् ॥ ७० ॥
गोविन्ददेशिकमुपास्य चिराय भक्त्या
तस्मिन्स्थिते निजमहिम्नि विदेहमुक्त्या ।

---

१. 'दृष्ट्वा पुरा निजसहस्रमुखीम्' ख. २. 'समाधिपथरूढि' ख. ३. 'स वाग्मी प्राचीनपुण्यजनित भुवि बोधचिह्नैः' ख. ४. 'द्वारेऽभ्यपूजयदुपेत्य' क.

अद्वैतभाष्यमुपकल्प्य दिशो विजित्य
काञ्चीपुरे स्थितिमवाप स शंकरार्यः ॥ ७१ ॥
गोविन्दस्य व्रतिकुलगुरोः सिद्धिमाकर्ण्य कृत्वा
यत्कर्तव्यं तदपि वररुच्यादयो भ्रातरस्ते ।
स्वे स्वे कर्मण्यवहितधियो विद्यया कीर्तिमन्त-
श्चत्वारोऽपि स्थितिमभिमतामुज्जयिन्यामकुर्वन् ॥ ७२ ॥

इति श्रीयज्ञरामदीक्षितपुत्रस्य श्रीरामभद्रयज्वनः कृतौ पतञ्जलिचरितेऽष्टमः सर्गः ।

समाप्तोऽयं ग्रन्थः ।

---

१. 'आकर्ण्य काले' क.

# KÂVYAMÂLÂ. 54.



THE

# DHANAÑJAYAVIJAYA

OF

## KAÑCHANACHÂRYA



EDITED BY

PANDIT S'IVADATTA

**Head Pandit and Superintendent, Sanskrit Departm**

**Oriental College, Lahore,**

AND

KÂS'ÎNÂTH PÂNDURANG PARAB.



PRINTED AND PUBLISHED

BY

TUKÂRÂM JÂVAJÎ,

PROPRIETOR OF JAVAJI DÂDAJI'S "NIRNAYA-SAGARA" PRESS

BOMBAY

1895



*Price 3 Annas*

काव्यमाला. ५४.

श्रीकाञ्चनाचार्यविरचितो

# धनंजयविजयः ।

जयपुरमहाराजाश्रितमहामहोपाध्यायपण्डितदुर्गाप्रसाददारक-
केदारनाथकृपाङ्गीकृतशोधनकर्मणा शिवदत्तशर्मणा,
मुम्बापुरवासिपरवोपाह्वपाण्डुरङ्गात्मजकाशीनाथ-
शर्मणा च संशोधितः ।

स च

मुम्बय्यां निर्णयसागराख्ययन्त्रालये तदधिपतिना मुद्राक्षरैरङ्कयित्वा
प्राकाश्यं नीतः ।

१८९५



मूल्यं ३ आणकाः ।

# काव्यमाला।

श्रीकाञ्चनाचार्यविरचितो

## धनंजयविजयः।

हरेर्लीलावराहस्य दंष्ट्रादण्डः स पातु वः।
हेमाद्रिकलशा यत्र धात्री छत्रश्रियं दधौ ॥ १ ॥

अपि च।

तद्वः प्रमार्ष्टु विपदः प्रणतार्तिहन्त्र्या
न्यस्तं पदं महिषमूर्धनि चण्डिकायाः।
वैरी यदीयनखरांशुपरीतशृङ्गः
शक्रायुधाङ्कितनवाम्बुधरप्रभोऽभूत् ॥ २ ॥

अपि च।

तद्वः सारस्वतं चक्षुः समुन्मीलतु सर्वदा।
यत्र सिद्धाञ्जनायन्ते गुरुपादाब्जरेणवः ॥ ३ ॥

(नान्द्यन्ते)

**सूत्रधारः**—(समन्तादवलोक्य।) अहो रमणीयता प्रभातस्य। तथा हि।

दाराणां मुरवैरिणो रतिपतेर्मातुस्त्रिलोकीजितः
स्फारत्पङ्कजकोटरोदरजुषो निद्राविरामे श्रियः।
प्रत्युद्बुद्धमरालपक्षपटहध्वानप्रबन्धानुगं
भृङ्गी मङ्गलगाथिकेव सततं प्रोत्कूजति प्राङ्गणे ॥ ४ ॥

(पुनः परितोऽवलोक्य।) अहो रमणीयः शरदारम्भः। यतः।

............................................... ....... ।
सरो हरति मे चेतः प्रोन्मूर्च्छत्पद्मकुड्मलम् ॥ ५ ॥

अपि च ।

निष्कम्पा पृथिवी सशाद्वललता निर्दुर्दिनं चाम्बरं
सुव्यक्तामलतारकेन्दु सरितः काशप्रसूनाङ्किताः ।
तोयं वीतविषं सरांसि विकसत्पद्मानि शुभ्रा दिशो
द्रष्टुं संप्रति शारदीं श्रियमिमां मन्ये प्रबुद्धो हरिः ॥ ६ ॥

(नेपथ्याभिमुखमवलोक्य ।) क एष लिखितहस्तः समायाति ।

(ततः प्रविश्य पुरुषो लिखितमर्पयति ।)

**सूत्रधारः**—(विमृश्य वाचयति ।) 'अस्ति प्रशस्तिसहितः श्रीमाञ्जयदेवः ।

अर्थिप्रत्यर्थिलक्षेष्वप्यपराङ्मुखचेतसम् ।
यं पराङ्मुखता निन्युः केवलं परयोषितः ॥ ७ ॥

यस्य चेतसि निर्व्याजं द्वयं तूलकणायते ।
क्रोधे विरोधिनां सैन्यं प्रसादे कनकोच्चयः ॥ ८ ॥

स च प्रसादेन रङ्गमण्डनं नाम नटं समादिशति—

इह शरदि विराजद्वारिजोत्तंसितायां
प्रथमविगतनिद्रः श्रीकराश्लिष्टवक्षाः ।
शिथिलयति मुरारिर्योगनिद्रानुरागं
तदयमखिललोकस्योत्सवः किं पुनर्नः ॥ ९ ॥

तदिदानीं भवता वीरसाद्भुतं रूपकमभिनीय गदाधरप्रमुखास्मत्परिषदानन्दनीया' इति । किं नाम तादृशं रूपकम् । (स्मृत्वा ।) आः, ज्ञातम् ।

कुलं कविमुनेरस्ति पुत्रान्यत्र सरस्वती ।
संशिक्षयति धात्रीव नितान्तं मधुरां गिरम् ॥ १० ॥

तत्राभवदुपाध्यायो नारायणसमाह्वयः ।
जितवादिसहस्रौघः प्राप वादीश्वराभिधाम् ॥ ११ ॥

अपि च ।

कृतसंन्यसनात्प्रयच्छतोऽप्यभयं भूतगणाय योगिनः ।
निजमण्डलभेदशङ्किनो भयमेकस्य रवेरभूद्यतः ॥ १२ ॥

तत्सूनुः काञ्चनो नाम समस्तगुणवल्लभः ।
गोष्ठीशालेव विद्याना यस्य जिह्वा विराजते ॥ १३ ॥

तेन कृतो धनंजयविजयो नाम व्यायोगोऽभिनेतव्यः। (नेपथ्याभिमुखमवलोक्य।) कः कोऽत्र भोः ।

(प्रविश्य ।)

**पारिपार्श्विकः**—भाव, को णिओओ । (क)

**सूत्रधारः**—आहूयता धनंजयविजयाभिनयकुशलो नटवर्गः ।

**पारिपार्श्विकः**—तह । (इत्युक्त्वा निष्क्रान्त ।) (ख)

**सूत्रधारः**—(प्राचीमवलोक्य स्थित्वा ।)

चिरमज्ञातः समयवशात्कोऽपि तेजसो निचयः ।
प्रकटीभवति विवस्वानेप किरीटीव समयमुत्तीर्णः ॥ १४ ॥

(तत॰ प्रविशति विराटामात्येन सहार्जुन ।)

**अर्जुनः**—(सोत्साहम् ।) अनुकूलं दैवं लक्ष्यते । यतः ।

या लतान्विष्यते सैव लग्ना सप्रति पादयोः ।
कुरुराजोऽभियातव्यः स्वयमेव समागतः ॥ १५ ॥

**सूत्रधारः**—(सहर्षमवलोक्य ।) अये, परिगृहीतार्जुनवेषः श्यामलकः प्रवृत्तः । तदहं पात्रान्तराणि प्रगुणयामि ।

(इति निष्क्रान्त ।)

**इति प्रस्तावना ।**

**नायकः**—(सहर्षम् ।)

गोरक्षणं सकलशात्रवमानभङ्ग-
स्तोषो विराटनृपतेरुपकारिणश्च ।
पर्याप्तमेकमपि यत्समरोत्सवाय
सर्वं तथा मिलितमत्र ममैव भाग्यैः ॥ १६ ॥

---

(क) भाव, को नियोगः ।

(ख) तथा ।

अपि च ।

सा मनोरथसंपत्तिः स एव हि महोत्सवः ।
निर्वापयन्ति यद्वैरं परिपन्थिषु मानिनः ॥ १७ ॥

**अमात्यः**—देव, नेय सङ्ग्रामस्य भूमिः ।

निर्दग्धकालकेयस्य निवातकवचद्विषः ।
कौरवास्ते कियन्मात्रं रणाराधितशूलिनः ॥ १८ ॥

**नायकः**—साधु सुयोधन, साधु ।

यत्पूर्वजैरधिगतं भुजविक्रमेण
तत्प्राप्य राज्यमखिलं कपटाक्षवृत्त्या ।
गाः सांप्रतं हरसि भिल्ल इव त्वयाद्य
सापत्रपः कुलगुरुर्विहितो विधुर्नः ॥ १९ ॥

**अमात्यः**—देव,

सुयोधनचरित्रेण शशिनोऽवनतं शिरः ।
चरित्राणि तवैवाद्य कुर्वन्तु परमोन्नतम् ॥ २० ॥

**नायकः**—(विचिन्त्य ।) कथमद्य नगरसमीपे क्षिप्तसमरोपकरणानयनाय प्रहितः प्रतिपन्नसारथ्यश्चिरयति कुमारः ।

(ततः प्रविशति विराट्कुमारः ।)

**कुमारः**—देव, अनुष्ठितस्तवादेशः । तदारोहत्वायुष्मान् ।

(नायकः कृतसनाहो रथमारोहति ।)

**अमात्यः**—(सविस्मयं नायकमवलोक्य ।)

विरचितसमरोचिताङ्गभूषः परिहितभूषितवेष एष भाति ।
जलधरनिकरोपरोधशून्यो रविरिव राजसुतः शरत्प्रचण्डः ॥ २१ ॥

(पुनर्निपुणमवलोक्य ।)

हेषन्ते यज्जितजलधरध्वानमेते तुरङ्गा
भूमिं पादैर्यदपि च मुहुर्दक्षिणैरालिखन्ति ।
यानौत्सुक्यं यदपि चलनाद्बालधेर्व्यञ्जयन्ति
त्वद्दोर्दण्डद्वितयवशगा तत्समग्रा जयश्रीः ॥ २२ ॥

**नायकः**—अमात्य, वयमिदानीं गाः प्रत्यानेतुं प्रस्थिताः स्मः । त्वं गोहरणोद्विग्नं पौरजनं समाश्वासय ।

**अमात्यः**—यदादिशति देवस्तथा करोमि । (इति निष्क्रान्तः ।)

**नायकः**—(कुमारं प्रति ।) यावन्मा गमन्दूरे गावस्तावन्नोदयाश्वान् ।

(कुमारस्तथा करोति ।)

**नायकः**—(रथवेगं निरूप्य ।)

आलिङ्गन्तो वसुधां निजखुरदलितामिवानुनेतुममी ।
वदनविगतचरणा इव सलक्ष्यन्ते जवादश्वाः ॥ २३ ॥

अपि च ।

विच्छिन्ना रथचक्रपद्धतिरियं हेलाप्लुतैर्वाजिना-
मायान्तीव जवेन संमुखममी मार्गस्थिताः शाखिनः ।
खेदं पादतलाहतेरिव पुरो गन्तुं गतो नेहते
वाहानामनुकूलमारुतभरोद्धूतोऽपि धूलिव्रजः ॥ २४ ॥

(नेपथ्याभिमुखमवलोक्य ।) रे रे गोपालाः, अलं विषादेन । तथा हि ।

सिञ्चन्तः करुणारसेन हृदयं यावन्न वत्सा अमी
मातुर्मार्गविलोकनव्यसनिनो मुञ्चन्ति हम्बारवान् ।
याचन्ते नहि यावदेव शिशवः पातुं पयो नोत्सुका-
स्तावद्गाव इहेत्यवेत भवता चेतोज्वरः शाम्यतु ॥ २५ ॥

(नेपथ्ये ।)

महाप्पसाओ । (क)

**कुमारः**—आयुष्मन्, नूनमदूरे कुरुबलम् । यतः ।

वाजिव्राजखुराभिघातदलितक्षौणीरजोभिः पुरः
सान्द्रैर्जीर्णकपोतकण्ठरुचिभिर्व्योमेदमास्तीर्यते ।
किं वाक्येन करीन्द्रगण्डविगलद्दानाम्बुधारागणा-
भोगं संप्रथयन्त्यमी परिमलप्रोद्गारिमन्दानिलाः ॥ २६ ॥

---

(क) महाप्रसादः ।

**नायकः**—सुव्यक्तं कुरुबलम् । तथा हि ।

व्याधूतचामरमुदस्तसितातपत्र-
मुत्क्षिप्तकुन्तभयविद्रुतपत्त्रिचक्रम् ।
एतद्बलं कुरुपतेर्गिरपूर्यमाण
शङ्खध्वनित्रसदरण्यमृगं पुरस्तात् ॥ २७ ॥

(बाहू प्रति सोत्साहम् ।)

कान्तारक्षितिपूपधानविषये यद्भ्यां लिभिर्धूसरौ
पाञ्चालीपरिरम्भनिर्भररसास्वादेऽपि यद्वञ्चितौ ।
यत्कान्ताजनयोग्यदन्तवलयैराविष्टितौ निस्त्रपं
तद्बाहू स्मरतं चिराय पुरतस्तिष्ठन्त्यमी वैरिणः ॥ २८ ॥

(नेपथ्ये ।)

धृतधनुरिव दर्पः साहसस्यैव मूर्तिः
स पटुरिव रसोऽयं विग्रही वीरनामा ।
दधदिव जयलक्ष्मीं सनिधौ चापवल्ली-
मगणितकुरुराजः कोऽयमेकोऽभ्युपैति ॥ २९ ॥

(उभौ शृणुतः ।)

**कुमारः**—आयुष्मन्, कस्येदमुदारं वचनम् ।

**नायकः**—अस्मत्प्रथमगुरोः शारद्वतस्य ।

(पुनर्नेपथ्ये ।)

द्वन्द्वाहवाराधितशूलपाणिः स पाण्डवः खाण्डवतर्पिताग्निः ।
ज्याघातजातः किणसंनिवेशः करद्वये यस्य परस्य पुंसः ॥ ३० ॥

अपि च ।

गलितनिखिलशस्त्रं बाहुमात्रावशेषं
द्विगुणिततररागं यं निरीक्ष्य स्मरारिः ।
विहितकपटरूपः साहसाकृष्टचेता
नयनमभिललाटं दर्शयामास सद्यः ॥ ३१ ॥

व्यक्त एवायमर्जुनः । तथा हि ।

हेलोल्लङ्घितवारिधिर्जनकजाविश्लेषशुष्यन्मन -
कौशल्यासुतदैन्यपानशुपटुर्ग्रस्ताशुमन्मण्डलः ।
निर्दग्धाखिलराक्षसेश्वरपुरः सौमित्रिसंजीवन-
प्रोत्खातौषधिपर्वतोऽस्य मरुतः पुत्रो ध्वजे वर्तते ॥ ३२ ॥

(उभौ शृणुत ।)

**कुमारः**—आयुष्मन्,

कृतवीररसोद्रेकैर्वैदर्भीगर्भितैः पदैः ।
त्वयि पुत्र इवात्यर्थं पक्षपातं व्यनक्ति कः ॥ ३३ ॥

**नायकः**—कुमार, किमित्युच्यते पुत्र इवेति । ननु पुत्र एवाहमाचार्यस्य ।

(नेपथ्ये ।)

तूर्णं कर्ण धनुर्गृहाण समरे शारद्वतस्त्वग्रणी-
र्भारद्वाज भृगूद्वहादधिगतान्यस्त्राणि संशिक्षय ।
द्रौणे नन्दय कौरवक्षितिपतिं पुत्रस्तथा शान्तनोः
संधत्ते समरोचितं पुररिपोः शिष्योऽयमास्तेऽग्रतः ॥ ३४ ॥

**नायकः**—(सानन्दम् ।) सोऽयं कुरुराजः सेनाया सनाहयति योधान् ।

**कुमारः**—देव, सारथिना परबलयोधाः स्वरूपतो वीर्यतश्च ज्ञातव्याः ।

**नायकः**—पश्यैनं भुजगध्वजावेदितकौटिल्यम् ।

यस्येन्दुवंशकलहप्रथमाङ्कुरस्य
सौजन्यगन्धमपि यस्य न वेत्ति चेतः ।
आ जन्मनो विषजलाग्निमुखैरुपायै-
रस्मन्निकारनिरतः कुरुराज एषः ॥ ३५ ॥

**कुमारः**—कोऽयं ततो दक्षिणतः ।

**नायकः**—(साश्चर्यम् ।)

रोषोत्कर्षकषायितोल्बणदृशोऽप्यग्रे हिडिम्बाद्विषः
पाञ्चालीहृदयस्थलात्सरभसं लज्जादुकूलाञ्चलः ।

निर्मोकः फणिनस्तनोरिव बलाद्येनावकृष्टः पुरा
सोऽयं साहसिकाग्रणीस्तनुरथे दुःशासनस्तिष्ठति ॥ ३६ ॥

**कुमारः**—किमतः परं साहसम् ।

**नायकः**—इतः पश्य । (सप्रणामम् ।)

प्रतिफलितरविप्रभावितानः स्फुरदुरुकाञ्चनवेदिसूचितेज्यः ।
दधदुपनिषदः श्रियं समग्रां प्रथितयशा गुरुरेष कौरवाणाम् ॥ ३७ ॥

**कुमारः**—महानुभावः खल्वेष लक्ष्यते ।

**नायकः**—इतः पश्य ।

योऽय ललाटतटमण्डितचण्डचूडः
संलक्ष्यते स्वयमिव त्रिपुरप्रमाथी ।
मूर्तोऽस्त्रवेद इव दुर्विषहः परेषा
पुत्रो गुरोः पुनरय दयितः सखा मे ॥ ३८ ॥

**कुमारः**—पुनरावेदय ।

**नायकः**—

येनोच्चैर्ध्वजमिषतः कलश इवारोपितो धनुर्वेदः ।
कनककमण्डलुमण्डितरथवंशो भाति गुरुरेषः ॥ ३९ ॥

**कुमारः**—कोऽयं कुरुराजसंनिधौ समरार्थीव दृश्यते ।

**नायकः**—(सामर्षम् ।)

मूलं सुयोधनकृताखिलदुर्नयानां
यद्दोर्बलं भृगुकुलोद्वहगूढशिष्यः ।
सोऽय प्रसन्नबलसूदनदत्तशक्तिः
सूतात्मजो निजकुलानुचिताभिमानः ॥ ४० ॥

**कुमारः**—(सोपहासम् ।) नन्वेष घोषयात्राया विदितप्रभावः । क एष ध्वजः ।

**नायकः**—(सप्रणामम् ।)

अन्याङ्गनापरिहृतिप्रणयेन कीर्ते-
र्वालिङ्गितो धवलया पलितच्छलेन ।

द्वन्द्वाहवप्रकटनिर्जितजामदग्न्यो
देवव्रतः पृथुयशाः स पितामहो नः ॥ ४१ ॥

सूत, त्वरय त्वरय तुरगान् ।

(नेपथ्ये ।)

वैमानिका इमे व्योम्नि समरालोकनोत्सुकाः ।
बाहुसारमिदानीं त्वं प्रदर्शय धनंजय ॥ ४२ ॥

(ततः प्रविशति विद्याधरसहित इन्द्रः प्रतीहारी च ।)

**इन्द्रः**—(साश्चर्यम् ।)

वाक्कलहोऽपि सुगहनो बहुभिर्बलिनो विहीनसामर्थ्यैः ।
किमुतानेकैर्बलिभिः क्रूरास्त्रनिपातदारुणः समरः ॥ ४३ ॥

(पुनः सविस्मयम् ।)

एको रथी प्रतिरथास्तु निरस्तसङ्ख्याः
कर्णादयः सुचिरराज्यमदेन दृप्ताः ।
वत्सस्तथाप्यहह निग्रहणं प्रविष्टः
सत्त्वं हि नोर्जिततरं विमृशत्यपायम् ॥ ४४ ॥

**कुमारः**—(पुरोऽवलोक्य ।) देव, कुरुपतिरेवागच्छति ।

**नायकः**—पूर्णास्तर्हि मनोरथाः ।

(ततः प्रविशति रथारूढो दुर्योधनः ।)

**दुर्योधनः**—(नायकं विलोक्य सामर्षम् ।)

वनवासपरिक्लेशात्किं निर्विण्णोऽसि जीवने ।
यदभीरेक एव त्वमनेकैर्योद्धुमुद्यतः ॥ ४५ ॥

**नायकः**—(सोपहासम् ।)

एको निवातकवचान्सह कालकेयै-
र्भस्मीचकार भगिनीमहरच्च शौरेः ।
एकेन खाण्डववनं जुहुवेऽनले च
पार्थस्य नाभिनव एष रणेषु पन्थाः ॥ ४६ ॥

**दुर्योधनः**—अलमेतैरुपहासैः । उपस्थितो निकषोपलोपमः संग्रामः ।

**नायकः**—(सहासम्।)

अपसर कुरुनाथ द्यूतमन्यादृशं त-
द्द्रुपदनृपतिपुत्री यत्र दासीकृतासीत्।
इह हि शरशलाकापातपूर्वं सगर्वं
प्रतिनृपतिशराक्षैः क्षत्रियद्यूतकेलिः॥ ४७॥

**दुर्योधनः**—(सामर्षम्।)

करिवदनवलयभूषितकरश्चिरत्यक्तकार्मुकाभ्यासः।
नर्तनशालां प्रविश प्रवीरपुरुषोचितो हि सङ्ग्रामः॥ ४८॥

**कुमारः**—(सोल्लुण्ठम्।) आर्य, एन चिरपरित्यक्तकार्मुकाभ्यास इत्यभिधत्से तद्युक्तम्।

सङ्क्रन्दनप्रहितखेचरवर्गबद्ध-
युष्मत्कृपाकुलनिजाग्रजशासनेन।
भीमानुजेन विहिता शरपञ्जरश्री-
र्नालोकिता हि भवता नृप विह्वलेन॥ ४९॥

**विद्याधरः**—देव, प्रौढः खल्वेष वत्सः।

**इन्द्रः**—राजपुत्रो ह्ययम्।

**दुर्योधनः**—सूत, अलं विप्रजनोचितवाक्कलहेन। विषमेयं भूमिः। रथसचारोचिता भुवमवतराम।

**सूतः**—यदभिरुचितं कुरुपतये।

(इति निष्क्रान्तौ।)

**विद्याधरः**—(नायकरथं निर्दिश्य।) देव,

त्वन्नन्दनस्यन्दनवाजिराजिक्षुरक्षतक्षुण्णरजःपताकाः।
विपक्षवक्षोऽरणिमन्थनोत्थप्रतापवह्नेरिव धूमलेखाः॥ ५०॥

**इन्द्रः**—भद्र, महाकविरसि।

**विद्याधरः**—देव, निकटगते किरीटिनि प्रवृत्तः कोलाहलः कुरूणाम्। तथा हि।

हेषाघोषैर्हरीणां जितघननिनदैर्बृंहितैः कुञ्जराणां
ज्याघातोत्थैर्निनादैः पटुपटहरवैर्मर्दलोद्दामशब्दैः ।
प्राप्तैः कर्णोपकण्ठं मदगजनिवहस्कन्धघण्टाप्रणादैः
शृङ्गाराय त्वरन्ते त्रिदशमृगदृशो वीरवर्गानुरक्ताः ॥ ११ ॥

**प्रतीहारी**—देव, ण कोलाहलमेत्तम् । जण्ण वि पउत्तम् । कुरुबलं पच्चहिआतस्स तुह उत्तस्स अहिमुहं प्रचलिदम् । देव, पेक्ख । आकण्णाकड्ढिअकठिणफग्गुणकोदण्डमुहणिस्सरन्तसरणिअरेहि केवि खण्डिदगत्ताओ, केवि भग्गकोदण्डाओ, केवि पमुडिदसीसकाओ, केवि णिभिण्णणेत्ताओ, केवि भग्गभुजाओ, केवि विक्खदवक्खत्थलाओ कुरुबले भटा दीसन्ति । (क)*

**इन्द्रः**—(सहर्षम् ।) कृतहस्तः खल्वेष वत्सः ।

**विद्याधरः**—देव, पश्य पश्य ।

मुञ्चद्भिर्मदवारि वारणगणैर्मेघायितं कार्मुकै-
रेतैः शक्रशरासनायितमधश्छत्त्रैः शिलीन्ध्रायितम् ।
खद्योतायितमस्त्रघट्टनसमुद्भूतस्फुलिङ्गैः स्फुर-
न्नाराचैरशनायित रणभुवा सैन्यैर्नभस्यायितम् ॥ १२ ॥

अपि च ।

त्वत्पुत्रमुक्तविशिखैरशनिप्रकाशै-
रामूललूननवकेतकान्तदन्ताः ।
त्रासावसन्नमदधारकपोलभागा
संपादयन्ति करिणः करिणीभ्रमं नः ॥ १३ ॥

---

(क) देव, न कोलाहलमात्रम् । जन्यमपि प्रवृत्तम् । कुरुबलं प्रत्यभियातस्य तव पुत्रस्याभिमुखं प्रचालितम् । देव, प्रेक्षस्व । आकर्णाकृष्टकठिनफाल्गुनकोदण्डमुखनिःसरच्छरनिकरैः केऽपि खण्डितगात्राः, केऽपि भग्नकोदण्डाः, केऽपि प्रमोटितशीर्षकाः, केऽपि निर्भिन्ननेत्राः, केऽपि भग्नभुजाः, केऽपि विक्षतवक्षःस्थलाः कुरुबले भटा दृश्यन्ते ।

**इन्द्रः**—(सतोषम् ।)

हरान्तेवासिनस्तस्य कालकेयान्तकस्य च ।
यदुनाथसनाथस्य का श्लाघा कौरवैर्जितैः ॥ १४ ॥

**प्रतीहारी**—पेक्खदु देवो ।

बाणप्पलूणमअवारणगेरगेर-
णाणासिराहिमुहदत्तगहीरतुण्डा ।
एसा पणच्चिदकराङ्गुलि कण्ठदिद्ध
रत्तासअ पिबइ कावि पिसाअकण्णा ॥ १५ ॥ (क)

**विद्याधरः**—देव, पश्य ।

एते मत्तमतङ्गजाः प्रजविनः श्वासाकुलाधोरणाः
स्फूर्जच्चन्द्रकिबर्हभारकलितोद्दण्डध्वजश्रेणयः ।
कुप्यत्त्वत्करवज्रपातचकितप्रभ्रान्तपृथ्वीधर-
व्यूहभ्रान्तिमुदञ्चयन्ति नितरा त्वत्पुत्रविद्राविताः ॥ १६ ॥

(इन्द्र सहर्ष पश्यति ।)

**प्रतीहारी**—देव, पेक्ख पेक्ख । णिरन्तरविक्खित्तबाणणिउरम्बपरिक्खदगअणररुहिरपाणसंतप्पिदाओ साहुवादोत्तरं जादुहाणजोइणीओ अहिणन्दन्ति तुह उत्तस्स विअअम् । (ख)

**इन्द्रः**—जय एव तर्हि । सत्याशिषस्ताः ।

**विद्याधरः**—(विभाव्य ।) देव, महद्युद्धं वर्तते । पश्य पश्य ।

---

(क) प्रेक्षता देवः ।

बाणप्रलूनमदवारणग्रन्थिग्रन्थि-
नानाशिराभिमुखदत्तगभीरतुण्डा ।
एषा प्रनर्तितकराङ्गुलि कण्ठदिग्ध
रक्तासव पिबति कापि पिशाचकन्या ॥

(ख) देव, प्रेक्षस्व प्रेक्षस्व । निरन्तरविक्षिप्तबाणनिकुरम्बपरिक्षतगजनररुधिरपानसतर्पिता. साधुवादोत्तर यातुधानयोगिन्योऽभिनन्दन्ति तव पुत्रस्य विजयम् ।

वपुषि भटकरोटिन्यस्तकीलालसिन्धुं
द्विरदकरमृणालैर्योगिनीभिर्निपीय ।
समरविजयिने यद्बाहुमुद्यम्य भूयः
प्रकटितपरितोषं स्वस्तिवादोऽभितेने ॥ ९७ ॥

अपि च ।

भुग्नभ्रूयुगलैः क्रुधा समधिकस्फारारुणाक्षैः क्षणा-
त्स्वेदाम्भःपटलप्रमृष्टतिलकैर्दष्टाधरोष्ठैरपि ।
दष्टश्मश्रुभिरुत्पतद्भिरभितः सकीर्णमालक्ष्यते
त्वत्पुत्रास्त्रनिकृत्तवैरिसुभटश्रेणीशिरोभिर्वियत् ॥ ९८ ॥

(पुनः सविस्मयमालोक्य ।) देव, पश्य ।

कोऽप्येष खण्डितशिरा विकसन्मुखश्रीः
प्रारब्धताण्डवविधिः सुरकामिनीभिः ।
आलोक्यते निजकराभिनयानुरूप-
व्यापारितेक्षणनिवेदितसत्त्वसारः ॥ ९९ ॥

**इन्द्रः**—(सहर्षम् ।) किं किं पश्यामि । दोलायित मनः ।

मायाविभिः कुरुबलैः सह युध्यमानं
कुन्तीसुतं रणशिरस्यसहायवीरम् ।
तद्वैरिवीरवरणेषु तथात्र नूनं
सापत्न्यसभ्रमकलि सुरकामिनीनाम् ॥ ६० ॥

**विद्याधरः**—एवमेतत् । (अन्यतोऽवलोक्य ।) देव, पश्य पश्य ।

दूरात्प्रोत्सार्यमाणापरशरनिकरज्वालकीलाभिघात-
प्रभ्रश्यद्वाजिवर्गभ्रमणनियमनव्याकुलब्रध्नसूतः ।
लेढि प्रौढो हुताशः कृतलयसमयाशङ्कमाकाशवीथि
गङ्गासूनुप्रमुक्तप्रथितहुतवहास्त्रानुभावप्रसूतः ॥ ६१ ॥

**प्रतीहारी**—देव, अह्माणं वि णिअडवत्ती भआणओ एसो हुदा-
सणो । (क)

---

(क) देव, अस्माकमपि निकटवर्ती भयानक एष हुताशनः ।

**विद्याधरः**—भद्रे, मा भैषीः । किं नामेदं किरीटिनः । पश्य पश्य ।

नीलैः कालाञ्जननिभतमःस्तोमलिप्तान्तरिक्षै-
विद्युद्दामद्युतिधवलिताशेषदिक्चक्रवालैः ।
धीरध्वानैः कलभकनिभैः स्थूलधाराः सृजद्भि-
र्मेघैर्नीतः प्रलयमनलो वारुणास्त्रप्रसूतैः ॥ ६२ ॥

**इन्द्रः**—महानुभावः खल्वेष वत्स ।

**प्रतीहारी**—देव, संपदं राहासुदेण भुजङ्गमत्थं पउत्तम् । आलोल-जीहाजुअलकरालमुहणीसरन्तगरलधूमलेहाकरम्बिदफणारअणकिरणमाला-विडम्बिदसुरकोअण्डाओ विहलिदसअलपुहवीवलआओ पेक्खणमेत्तदग्धम-हामहीरुहाओ अपसरन्ति सप्पाओ । (क)

**विद्याधरः**—

दीर्घैः सज्जनसख्यवन्मुकुलितैश्चित्तैः खलानामिव
व्यालैर्योगिजनैरिवाम्बरतलव्याप्तैर्लसत्स्वस्तिकैः ।
रत्नोद्भासिकरोज्ज्वलैर्नृपतिवत्स्वर्गस्थवद्भोगिभी
राधेयास्त्रभुजङ्गमास्त्रजनितैर्दिक्चक्रमाक्रम्यते ॥ ६३ ॥

**इन्द्रः**—खाण्डवदाहे कृतवैराः किं दशन्ति सर्पाः ।

**विद्याधरः**—अलं विषादेन । अर्जुनेन प्रयुक्तं गारुडमस्त्रम् । पश्य पश्य ।

पादाघातनिपातमारुतभरात्प्रोत्क्षिप्तपृथ्वीधरा-
श्चञ्चूदष्टविशालभोगभुजगाः सूर्योपकण्ठस्पृशः ।
संतोषं जनयन्त्यमी कुलगुरोस्तीक्ष्णस्तथा सारथे-
र्मन्ये वैरिनृपप्रमाथविकसद्विक्रान्तयः पक्षिणः ॥ ६४ ॥

---

(क) देव, सांप्रतं राधासुतेन भुजङ्गमास्त्रं प्रयुक्तम् । आलोलजिह्वायुगल-करालमुखनिःसरद्गरलधूमलेखाकरम्बितफणारत्नकिरणमालाविडम्बितसुरको-दण्डा विह्वलितसकलपृथिवीवलयाः प्रेक्षणमात्रदग्धमहामहीरुहा अपसरन्ति सर्पाः ।

**इन्द्रः**—(सहर्षम् ।) ततस्ततः ।

**प्रतीहारी**—एसो संपदं दुज्जोधणभच्छिदेण ढोणेण मुत्तो वारणबाणो तुह उत्तस्स समुपचलिदो । (क)

**विद्याधरः**—(सम्यगवलोक्य ।) प्रयुक्तं वैनायकमस्त्रम् । पश्य पश्य ।

सिन्दूरारुणमौलिभिः स्वदशनप्रोताम्बुदश्रेणिभि-
लीलोदस्तकराग्रमारुतभरप्रोद्धूततारागणैः ।
पादाघातचलत्कुलक्षितिधरैः संकीर्णमालक्ष्यते
हैरम्बास्त्रविनिःसृतैर्मदमुखैः स्तम्बेरमैरम्बरम् ॥ ६९ ॥

**इन्द्रः**—ततस्ततः ।

**विद्याधरः**—पार्थेन सिंहास्त्रं प्रयुक्तम् । पश्य पश्य ।

दंष्ट्राज्योतिःखचितगगनैः केसराटोपभीमै-
रुल्लाङ्गूलैः क्षितिधरगुहासंचरद्धीरनादैः ।
सिंहैरन्तर्नखरशिखरात्खातकुम्भस्थलासृ-
ग्धारास्वादव्यसनविवशैः क्वापि नीता गजेन्द्राः ॥ ६६ ॥

**इन्द्रः**—स्वल्पावशिष्टस्तर्हि जयः ।

**विद्याधरः**—देव, नैव । निरवशिष्टश्च ।

हत्वा शान्तनुनन्दनस्य तुरगान्सूत कुरूणां गुरोः
कर्णस्यापि रथं विदार्य कणशः कृत्वा विसङ्गं कृपम् ।
छित्त्वा द्रोणसुतस्य कार्मुकलता विद्राव्य चान्यद्बलं
त्वत्पुत्रो भयविद्रवत्कुरुपतेः पन्थानमन्वेत्ययम् ॥ ६७ ॥

**प्रतीहारी**—अच्चाहिदं दुज्जोधणस्स । (ख)

**विद्याधरः**—नैव ।

विमुखे निपतति शस्त्रं सक्रन्दननन्दनस्य न हि जातु ।
मणिमयमुकुटनिपातात्कोपाग्निस्तस्य कोपितः किंचित् ॥ ६८ ॥

---

(क) एष सांप्रतं दुर्योधनभर्त्सितेन द्रोणेन मुक्तो वारणबाणस्तव पुत्रस्य समुपचलितः ।

(ख) अत्याहितं दुर्योधनस्य ।

(नेपथ्ये ।)

भो भो राधेयमित्र,

राजात्मजापरिभवक्षुभितः प्रतिज्ञा-
मार्यस्तवोरुदलने यदि नाकरिष्यत् ।
नूनं स्फुरन्मुकुटपाटनपाटवेन
तीक्ष्णः शरस्तव शिरोऽप्यहरिष्यदेव ॥ ६९ ॥

**प्रतीहारी**—देव, सुदं तुह उत्तस्स वअणम् । (क)

**इन्द्रः**—(सविस्मयम् ।)

दैवानुकूल्ये किं नाम न शिवाय प्रकल्पते ।
क्रुद्धभीमप्रतिज्ञापि ररक्ष कुरुभूपतिम् ॥ ७० ॥

**विद्याधरः**—देव, दुर्योधनमुकुटपाटनक्षुभितैः कर्णपुरःसरैः कुरुभिः समन्ततो वेष्टितोऽर्जुनः ।

**इन्द्रः**—(साशङ्कम् ।) ततस्ततः ।

**विद्याधरः**—देव, त्वत्पुत्रेण प्रस्वापनास्त्रं प्रयुक्तम् ।

आमीलितेक्षणयुगं प्रथमं प्रसर्प-
न्निश्वासवातभरपूरितकण्ठघोषम् ।
गण्डस्थलानिहितकार्मुककोटि सुप्तं
संलक्ष्यते कुरुबलं मृतकल्पमेतत् ॥ ७१ ॥

**इन्द्रः**—आयोधनश्रान्तानामुचितमेतत् । ततस्ततः ।

**विद्याधरः**—

एकं शान्तनवं हित्वा सर्वे विवसनाः कृताः ।
प्रमृज्य लोचने पश्चात्प्रबुद्धाश्च पलायिताः ॥ ७२ ॥

अपि च ।

निर्जित्य कौरवबलान्यथ बल्लवेभ्यो
गास्ताः समर्प्य मुदितैरभिनन्दितस्तैः ।

---

(क) देव, श्रुतं तव पुत्रस्य वचनम् ।

प्रत्युद्गतः पुरजनैरथ धूलिजाल-
व्यालोलसक्तनयनैरयमेति पार्थः ॥ ७३ ॥

**इन्द्रः**—(आलोक्य ।) यद्द्रष्टव्यं तद्दृष्टम् ।

(ततः प्रविशति रथारूढो नायकः सूतश्च ।)

**नायकः**—(सूत विलोक्य ।) कुमार,

न तथा मोदते चित्तं जित्वा कुरुपति रणे ।
यथाक्षतशरीरेण त्वया मत्स्येन्द्रनन्दन ॥ ७४ ॥

**सूतः**—त्वयि रक्षितरि किं दुर्लभम् ।

**इन्द्रः**—(सरभसम् ।) दृष्टद्रष्टव्योऽस्म्यहम् । (इति निष्क्रान्तः ।)

**नायकः**—(सतोषम् ।) सूत,

दुःशासनो यदकरोत्कुरुसंनिधाने
पञ्चालराजतनया प्रसहन्विवस्त्राम् ।
तत्साम्प्रतं प्रतिकृत हरता मयात्र
निद्राणकौरवबलस्य रणेऽशुकानि ॥ ७५ ॥

**सूतः**—सर्वमेतत्प्रतिकृतम् । तावच्च ।

सङ्ग्राममरणं नाम क्षतदुःखं सुखान्तरम् ।
आजन्म हृदये शल्य मानभङ्गो हि मानिनाम् ॥ ७६ ॥

**नायकः**—(पुरोऽवलोक्य ।) अये सोपकरणानुज आर्य, आर्यश्च वि-
राट इत एवागच्छति ।

(ततः प्रविशन्ति यथानिर्दिष्टा युधिष्ठिरभीमनकुलसहदेवाः सपरिवारा विराटश्च ।)

**युधिष्ठिरः**—मत्स्यराज, पश्य पश्य ।

रथतुरगरजोभिर्धूसरस्मश्रुजाल
श्रमजलकणिकाभिर्भासुराभिः परीतम् ।
असमसमरकर्मक्लान्तगात्रं यस्य वक्त्रं
जयति विजयलक्ष्मीसङ्गसपत्नशोभम् ॥ ७७ ॥

**विराटः**—

शोभन्ते विद्यया विप्राः क्षत्रिया विजयश्रिया ।
श्रियोऽनुकूलदानेन लज्जया कुलपालिकाः ॥ ७८ ॥

**नायकः**—(ससंभ्रमम् ।) अये, कथमार्यः । (रथादवतीर्य यथोचितमभिवादयते ।)

**सर्वे**—(अभिनन्दन्ति ।)

एकोऽहरद्रिपुपुराणि हरः खरादी-
नेकश्च दण्डकवने न्यवधीत्स रामः ।
एकोऽधुना कुरुबलानि भवानजैषी-
न्नाश्रावि नैक्षि च पुनः पुरुषश्चतुर्थः ॥ ७९ ॥

**नायकः**—स खलु युष्माकं प्रसादः ।

**विराटः**—(नेपथ्याभिमुखमवलोक्य ।) राजपुत्र, पश्य पश्य ।

वत्सालोकप्रस्नुतापीनभाजः सिञ्चन्त्यः क्ष्मां क्षीरधाराच्छलेन ।
चन्द्रालोकस्पर्धिनी धेनवस्ते कीर्तिं मूर्तां नूनमेताः सृजन्ति ॥ ८० ॥

(अर्जुनं संबोध्य ।)

मध्येसभं यो द्रुपदात्मजायाश्चकर्ष केशान्धृतराष्ट्रपुत्रः ।
निर्यात्यमेतन्मुकुटं निपात्य निर्यातितं तस्य सुयोधनस्य ॥ ८१ ॥

(तच्छ्रुत्वा ।)

**भीमः**—(सामर्षम् ।) भो भो राजन्, नैतत्प्रतिकृतं भवति । किंतु ।

दुःशासनस्य गदया प्रविदार्य वक्षः
सद्यः कदुष्णरुधिराणि ततो निपीय ।
तच्छोणिताम्बुलुलिता सुनियम्य देव्या
वेणी तु तत्प्रतिकरिष्यति भीम एव ॥ ८२ ॥

**युधिष्ठिरः**—वत्स, किमसाध्यं त्वया ।

लीलोन्मूलितकौबेरसौगन्धिकवनश्रियः ।
लीलाहतहिडिम्बस्य विक्रमं ते रुणद्धि कः ॥ ८३ ॥

**भीमः**—(श्रुत्वा सानुनयम् ।) शृणोत्वार्यः । न क्षमेऽहम् ।

**युधिष्ठिरः**—अतीतः कालः क्षमायाः, आसन्नश्च कालो विक्रमस्य । अलमनुनयेन ।

**विराटः**—(युधिष्ठिर प्रति ।)

अज्ञानतो नियुक्तश्च यदयोग्येषु कर्मसु ।
क्षन्तव्यं तन्महाभाग नाज्ञातमपराध्यति ॥ ८४ ॥

**नायकः**—राजन्, उपकार एवायम् । नापकारः ।

यदि कर्मस्वयोग्येषु त्वमस्मान्न न्ययोक्ष्यथाः ।
अज्ञातवासं राजायं नाकरिष्यत्सहानुजैः ॥ ८५ ॥

**विराटः**—(नायकं प्रति ।) राजपुत्र,

सख्यं साप्तपदीनं यत्सोढव्यः प्रणयो मम ।
अतस्त्वामर्थये किंचिदुत्तरा मे स्नुषास्तु ते ॥ ८६ ॥

**नायकः**—यद्रोचते भवते ।

स्वयमायान्तीं गेहे लक्ष्मीं को ना विमन्यते मूढः ।
दैवानुकूलता सा यदयाचितमाप्यतेऽभीष्टम् ॥ ८७ ॥

**विराटः**—किं ते भूयः प्रियमुपकरोमि ।

**नायकः**—

निस्तीर्णोऽज्ञातवासो रणभुवि विजिता धार्तराष्ट्राः सकर्णाः
स्त्रीरत्नं त्वत्तनूजा समजनि तनयस्याभिमन्योः कलत्रम् ।
गावः प्रत्याहृतास्ताः सुहृदपि परमस्त्वं च नः श्लाघनीय-
स्तज्जाने नैव किंचित्सुचिरमवमृशन्यन्मया प्रार्थनीयम् ॥ ८८ ॥

तथापीदमस्तु ।

सौजन्यामृतसिन्धवः परहितप्रारम्भवीरव्रता
वाचालाः परवर्णने निजगुणालापे च मौनव्रताः ।

आपत्स्वप्यविलुप्तधैर्यनिचयाः सपत्स्वनुत्सेकिनो
मा भूवन्खलवक्त्रनिर्गतविषम्लानाननाः सज्जनाः ॥ ८९ ॥

अपि च ।

सारस्वतं स्फुरतु चेतसि सत्कवीनां
चक्षुर्भवन्तु कृतिनो गतमत्सराश्च ।
भूपाश्च सन्तु कविसूक्तिषु सानुरागाः
संत्यज्य मण्डलकविप्रणयानुरागम् ॥ ९० ॥

विराटः—तथास्तु ।

(इति निष्क्रान्ताः सर्वे ।)

इति श्रीकाञ्चनाचार्यविरचितो धनंजयविजयो नाम व्यायोगः समाप्तः ।

KÂVYAMÂLÂ. 50.

# THE ALANKÂRAS'EKHARA

OF

## KES'AVAMIS'RA.

EDITED BY

PANDIT S'IVADATTA

**Head Pandit and Superintendent, Sanskrit Department, Oriental College, Lahore,**

AND

KÂS'ÎNÂTH PÂNDURANG PARAB.

PRINTED AND PUBLISHED

BY

TUKÂRÂM JÂVAJÎ.

PROPRIETOR OF JÂVAJÎ DÂDÂJÎ'S "NIRNAYA-SÂGAR" PRESS.

BOMBAY

1895

*Price 9 Annas*

काव्यमाला. ५०.

श्रीमाणिक्यचन्द्रकारितः

श्रीकेशवमिश्रकृतः

# अलंकारशेखरः ।



जयपुरमहाराजाश्रितमहामहोपाध्यायपण्डितदुर्गाप्रसाददारक-
केदारनाथकृपाङ्गीकृतशोधनकर्मणा शिवदत्तशर्मणा,
मुम्बापुरवासिपरबोपाह्वपाण्डुरङ्गात्मजकाशीनाथ-
शर्मणा च संशोधितः ।



स च

मुम्बय्या निर्णयसागराख्ययन्त्रालये तदधिपतिना मुद्राक्षरैरङ्कयित्वा
प्राकाश्यं नीतम् ।



१८९५







मूल्यं ९ आणकाः ।

# काव्यमाला।

श्रीमाणिक्यचन्द्रकारितः श्रीमत्केशवमिश्रकृतः

## अलंकारशेखरः।

प्रथमो मरीचि ।

प्राणान्कृशोदरीणा राधानयनान्तसर्वस्वम् ।
तेजस्तमालनीलं शरणागतवज्रपञ्जरं वन्दे ॥
स्वप्रकाशचिदानन्दमयाय परमात्मने ।
अविद्यानिबिडध्वान्तभास्कराय नमो[1]ऽन्वहम् ॥

ग्रन्थाः काव्यकृता हिताय विहिता ये सप्त पूर्वं मया
ते तर्कार्णवसप्लवव्यसनिभिः शक्याः परं वेदितुम् ।
इत्यालोच्य हृदा मदालसवधूपादारविन्दक्वण-
न्मञ्जीरध्वनिमञ्जुलोऽयमधुना प्रस्तूयते प्रक्रमः ॥

आसीत्प्रत्यर्थिपृथ्वीरमणकमलिनीवृन्दहेमन्तमासः
कीर्तिभ्राजत्सुशर्मान्वयकुमुदवनीयामिनीजीवनाथः ।
राजद्राजन्यराजीमुकुटमणिगणप्रोल्लसत्पादपीठः
प्रोद्यत्साम्राज्यलक्ष्मीशिथिलितनहुषो रामचन्द्रोऽवनीन्द्रः ॥

मित्राणि प्रतिपालयंस्त्रिजगती कीर्तीन्दुना ह्लादय-
ञ्शत्रूणा हृदय प्रतापदहनै रात्रिदिवं ज्वालयन् ।
सर्वस्वेन कृतार्थयन्द्विजगणान्देवान्मखैस्तोषय-
न्नेष प्रौढमनाश्चिराय बुभुजे सप्तार्णवां मेदिनीम् ॥

सूत्रामोद्दामढि[2]ल्लीपरिवृढविलसत्काबिलक्षोणिभर्त्रोः
प्रक्रान्ते प्रौढयुद्धे समदलयदसौ कोटिशो वैरिवीरान् ।

1. 'नमाम्य' क. २ 'दिल्ली' ख.

पश्चान्मासास्थिमेदःकलुषितवसुधां प्रोज्झ्य तांश्चाकलय्य
द्या यातान्वैरिवर्गान्दिवमपि सहसा जेतुकामो जगाम ॥
क्षीराम्भोधेः शशीव श्रुतिरिव वदनाद्वेधसो **रामचन्द्रा-**
दस्मादुद्यत्प्रतापः समजनि सुमना **धर्मचन्द्रो** नरेन्द्रः ।
यस्याद्यापि प्रसन्नस्मितसुभगमुखाः स्विद्यदञ्चत्कपोला
रोमाञ्चस्तम्भभव्यास्त्रिदशयुवतयो हन्त गायन्ति कीर्तीः ॥
निष्क्रान्तं सदनादुदैक्षि भगवानम्भोजिनीवल्लभ-
स्ते वाताः परिशीलिताः कमलिनीसौरभ्यमेदस्विनः ।
विश्रान्तं गिरिकाननेषु निबिडच्छायेषु भाग्योदया-
दित्थं स्मेरमुखाः स्तुवन्ति विपदं यद्वैरिवामभ्रुवः ॥
प्रत्यर्थिभूपतिपरिग्रहराज्यलक्ष्मी-
धम्मिल्लमाल्यसुरभीकृतपाणिपद्मः ।
तस्मादजायत समस्तगुणाभिरामो
**माणिक्यचन्द्र** इति राजकचक्रशक्रः ॥
काव्यालंकारपारंगममतिरखिलक्ष्माभृतां चक्रवर्ती
सर्वेषामस्तु काव्ये मतिरतिनिपुणेत्याशये संनिवेश्य ।
वेदान्तन्यायविद्यापरिचयचतुरं **केशवं** संनियुज्य
श्रीमन्**माणिक्यचन्द्रः** क्षितिपतितिलको ग्रन्थमेनं विधत्ते ॥
बहुदोषोऽपि विदोषः क्रियते सुजनेन बाण इव हरिणा ।
गुणवदपि निर्गुणीयति दुर्जनतो मूषिकात इव पुस्तम् ॥
परोद्वेगे परानन्दे खलसज्जनयोर्द्वयोः ।
स्वभाव एव शरणं विषपीयूषयोरिव ॥

अलंकारविद्यासूत्रकारो भगवाञ्शौद्धोदनिः परमकारुणिकः स्वशास्त्रं प्रवर्तयिष्यन्प्रथमं काव्यस्वरूपमाह—

**काव्यं रसादिमद्वाक्यं श्रुतं सुखविशेषकृत् ।**

आदिपदेनालंकारपरिग्रहः । तथा च तदुभयान्यतरवत्त्वं[1] लक्षणम् ।

---

१. 'त्व वा' ख.

अन्यतरत्त्वं च तदन्यान्यत्वम् । सुखविशेषसाधनत्वं[1] वा लक्षणम् । समुदायार्थशून्येऽपि[2] तदुभयमस्त्येवेति वृद्धाः । अदृष्टद्वारा तद्धेतुशब्देऽतिव्याप्तिराह—श्रुतमिति । सदिति शेषः । सुखे वैजात्यं सर्वानुभवसिद्धमेव ॥

केचित्तु—

'तददोषौ शब्दार्थौ सगुणावनलंकृती पुनः क्वापि ।'

इत्याहुः ॥ 'रसप्रतिपत्तिद्वारा[3] सुखविशेषसाधनं वाक्यं **काव्यम्**' इत्यपरे ॥ केचित्तु—'पदावली **काव्यम्**' । न तु निर्दोषगुणवदादि, काव्यदोषाणामपरिगणनापत्तेः । न च—दोषाभावघटितकाव्यत्वज्ञानार्थमेव प्रतियोगिपरिगणनम्—इति वाच्यम्, 'न चैतत्काव्यं दुष्टम्' इत्यनुद्भावनापत्तेः 'इद काव्यमेव न' इत्यभिधानस्यैवोचितत्वात्—इत्याहुः । तन्न । तवायं हेतुराभास इतिवदुपपत्तेः । व्याप्तिविशिष्टपक्षधर्मस्यैव हेतुत्वात् । न च हेतुत्वेनाभिमत इति वाच्यम् ॥ तुल्यत्वादिति ॥ वस्तुतस्तत्काव्यं[4] पृथगेव यत्र दोषगुणादिचिन्ता[5] । नहि । दुष्ट शरीरं शरीरमेव न भवति, इत्यन्ये ॥ कीर्त्यादिरूपफलसाधनता तु विशिष्टस्य । यदाह—

'साधुशब्दार्थसदर्भ गुणालंकारभूषितम् ।
स्फुटरीतिरसोपेतं काव्यं कुर्वीत कीर्तये ॥'

आहुश्च—

'निर्दोषं गुणवत्काव्यमलंकारैरलंकृतम् ।
रसान्वितं कविः कुर्वन्प्रीतिं कीर्तिं च विन्दति ॥' इति ॥

प्रवृत्त्यौपयिकं फलमाह—

**हिताय सुकविः कुर्यात्**

सुकवेरेव हितम्, अन्यस्य तु प्रतिकूलं[6] तत् ॥

उक्तं[7] च—

'गौर्गौः कामदुघा सम्यक्प्रयुक्ता स्मर्यते बुधैः ।
दुष्प्रयुक्ताः पुनर्गोत्वं प्रयोक्तुः सैव शंसति ॥

१. 'साधन' ख. २. 'शून्यत्वे' ख ३. 'प्रतिपत्तिगुणद्वारा' ख. ४. 'वस्तुतस्तु का' क-ख. ५. 'गुणदोषादि' क. ६. 'कूलमिदमिति भावः' क; 'प्रातिकूलमिति तन्न' ख. ७. 'तदुक्तम्' क.

श्लाघ्यः पामरपरिषदि कवयति दोलीककर्तापि ।
यस्मै स्पृहयति विद्वाँस्तत्काव्यं काव्यमित्याहुः ॥
अर्थैः कृतार्थयन्त्येके घटनापटवः परे ।
उभयत्र प्रवीणा ये त एव कवयो मताः ॥'

हितमाह **श्रीपादः**—
'लाभः पूजाख्यातिर्धर्म[1] कामश्च मोक्षश्च ।
इष्टानिष्टप्राप्तित्यागौ ज्ञानं फलानि काव्यस्य ॥'

इष्टेति गोवृषन्यायात् ॥

आहुश्च—
'काव्य यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये ।
सद्यः परनिर्वृतये कान्तासंमिततयोपदेशयुजे ॥'

वृद्धास्तु—
'श्रोतॄणां द्राग्महानन्दः स स्वस्मिन्नाभिमानिकः ।
तत्कालफलमेतावत्क्रमात्कीर्तिधनादिकम् ॥'

नन्वेवं सर्वः सुकविरेव स्यात् । अत आह—

**तद्धेतुः प्रतिभादिकम् ॥ १ ॥**

तदाह—
'प्रतिभा कारणं तस्य व्युत्पत्तिस्तु विभूषणम् ।
भृशोत्पत्तिकृदभ्यासः[2] काव्यस्यैषा व्यवस्थितिः ॥'

व्युत्पत्तिर्नानातन्त्रज्ञानम् ॥

आहुश्च—
'शक्तिर्निपुणता लोकशास्त्रकाव्याद्यवेक्षणात् ।
काव्यज्ञशिक्षयाभ्यास इति हेतुस्तदुद्भवे ॥'

शक्तिः पुण्यविशेषः । स एव प्रतिभेत्युच्यते ।
'व्युत्पत्तिः शक्तिरभ्यासस्त्रितयं काव्यसाधनम् ।'

इत्यपि ॥

---

१ 'यस्य' क. २. 'कृतोऽभ्यासः' क.

श्रीपादस्तु—

'परिशीलितकाव्यवर्त्मनां कविसंसर्गविशुद्धचेतसाम् ।
परिभावयतामनुक्षणं कविता पाणितले निषीदति ॥'

वृद्धास्तु[1]—

'नैसर्गिकी च प्रतिभा श्रुतं च बहु निर्मलम् ।
अमन्दश्चाभियोगोऽस्याः कारणं काव्यसंपदः ॥
मनःप्रसत्तिः प्रतिभा प्रातःकालेऽभियोगिता ।
अनेकशास्त्रदर्शित्वमित्यर्थालोकहेतवः ॥
द्वित्रि[2]कोपपरिज्ञानं द्वित्रि[3]व्याकरणज्ञता ।
छन्दोविद्याप्रवीणत्वं काव्येऽवश्यमपेक्ष्यते ॥'

आदिपदात्प्रकारज्ञानम् । तथा हि—सा खल्वेषा भारती सुरसरिदिव सहस्रमुख्यपि संक्षेपेण चतुर्धा प्रवर्तते । तदाहुः—

'संस्कृतं प्राकृतं चैव पैशाची मागधी तथा ।
विद्याश्चतस्र एवैताः सक्षेपात्काव्यवर्त्मनः ॥
देवाद्याः संस्कृतं प्राहुः प्राकृतं किन्नरादयः ।
पैशाची तु[5] पिशाचाद्या मागधी हीनजातयः ॥
चतसृष्वपि मूर्धन्यं संस्कृतं मुनयो विदुः ।
गद्यं पद्यं च मिश्रं च तत्रिधैव व्यवस्थितम् ।
गद्यमुत्कलिकाप्रायं पद्यगन्धीति च द्विधा ॥
तत्रापि पद्यं तदपि वृत्तकं वर्णमात्रयोः ।
समवैषम्यभेदेन तदानन्त्याय कल्पते ॥'

दण्डिनस्तु—

'तदेतद्वाङ्मयं भूयः संस्कृतं प्राकृतं तथा ।
अपभ्रंशश्च मिश्रं चेत्याहुरार्याश्चतुर्विधम् ॥

---

१ ख-पुस्तके नास्ति. २.–३. 'द्वित्रि' ख. ४. 'क्षते' ख. ५. 'च' ख.

